यस्य सङ्ग्रामशौण्डत्वं शासन्ते बाहुशालिनः ।
शसन्ते सद्गुणा नित्यं शसन्ति च सुरालयम् ॥१०१॥
भक्षयन्त्यसि भक्षन्ते मांसं भक्षन्ति शोणितम् ।
यत्खड्गखण्डिताङ्गानां शत्रूणां कौणपा रणे ॥ १०२ ॥
यस्तु लालयते बन्धून् लालयत्यखिलाः प्रजाः ।
उल्ललन्ति यमालोक्य ललनानां मनोरथाः ॥ १०३ ॥
मुटति द्विषतां दर्पं तेषां खड्गश्च मोटति ।
यो मोटयति राष्ट्रेषु तत्कीर्त्याऽमरमण्डपान् ॥ १०४ ॥
युद्धे क्षणाति शत्रूणामश्वान् मृणति वारणान् ।
शत्रुबाणैः पुनस्तस्य नैकोऽपि क्षियते नरः ॥ १०५ ॥
लज्जन्ति शत्रवो यस्मात् त्रसन्ति परदारगाः ।
यस्त्रासयति निःशेषान् खड्गेन परवारणान् ॥ १०६ ॥

---

बाहुशालिनः वीरपुरुषा इत्यर्थः, यस्य संग्रामशौण्डत्वं, रणपाण्डित्यं, शासन्ते प्रशंसन्ति। शसन्ते सर्वत्र प्रचरन्ति। शसन्ति गच्छन्ति ॥ १०१ ॥

कुणपः शवः अशनेन विद्यतेऽस्य इति कौणपः राक्षसः ॥ १०२ ॥

बन्धून् लालयते लिप्सते, सुहृत्समाजं कामयत इत्यर्थः। लालयति उपसेवते, अनुरञ्जयतीत्यर्थः। यं राजानम्, आलोक्य दृष्ट्वा, ललनानां नारीणां, मनोरथाः कामाः, उल्ललन्ति चलिता भवन्ति, अतिलोभनीयाकृतेस्तस्य दर्शनेन कामिनीजनहृदयेषु प्रबलाः कामवेदना जायन्त इति भावः ॥ १०३ ॥

द्विषतां शत्रूणां, दर्पम् अहङ्कारं, मुटति चूर्णयति हरतीति यावत् ॥१०४॥

क्षणाति हन्ति, हिंसार्थेऽस्य धातोः प्रयोगः। वारणान् गजान्, मृणति हन्ति, हिंसार्थेऽस्य तौदादिकस्य धातोः प्रयोगः ॥ १०५ ॥

चयति प्रत्यहं पापं चाययति द्विषतां कुलम्।
यशः चिययति रोदस्योर्यस्य धर्म्मरतात्मनः ॥ ११२ ॥

दण्डं जोड़यति द्विट्सु मनं तेषां च जोड़ति।
तानम्बुजन्मतापघ्नान् मण्डलेन जुड़त्यसौ ॥ ११३ ॥

धनं राध्नोति विप्रार्थं व्यसनानि च राध्यति।
यत्प्रसादात्मनः सर्व्वः सततं राध्यति क्रिया ॥११४॥

यो मोषति परद्रव्यं तस्य मुष्णाति यः शिरः।
मुष्णत्यपहृतार्थानां दुःखं धनसमर्पणात् ॥ ११५ ॥

भक्त्याऽर्चयति यो विप्रान् गुरून् देवांस्तथाऽर्चति।
अर्च्चन्ते चरणौ यस्य मौलिरत्नांशुभिर्नृपाः ॥ ११६ ॥

बहु व्यययति द्रव्यं तदर्थं यो व्ययत्यरीन्।
व्ययते यद्यशोबिम्बं त्रैलोक्यादर्पतां मतम् ॥११७॥

---

यशः कीर्त्तिः, रोदस्योः द्यावाभूम्योरन्तराले, चिययति वर्द्धति चि वृद्धौ इत्यस्य चौरादिकस्य प्रयोगः ॥ ११२ ॥

द्विट्सु शत्रुषु, दण्डं जोड़यति प्रेरयति, प्रयुङ्क्ते इत्यर्थः। अम्बुजन्मतापघ्नान् चन्द्रसमानान्, तान् रिपून्, मण्डलेन जुडति बध्नाति ॥ ११३ ॥

विप्रार्थे ब्राह्मणप्रीणनार्थे, धनं अर्थं, राध्नोति सम्पादयति। क्रिया कार्य्या, राध्यति सम्पन्ना भवति ॥ ११४ ॥

मोषति अपहरति। मुष्णाति छिनत्ति। अपहृताः अर्थाः धनानि येषां तेषां, ब्राह्मणानां जनानाम् ॥ ११५ ॥

मौलिषु किरीटेषु, 'मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिभूरुहे' इति हैमः, यानि रत्नानि, तेषाम् अंशुभिः किरणैः, चूडामणिमरीचिभिरित्यर्थः, यस्य चरणौ, अर्च्चन्ते पूजयन्ति ॥ ११६ ॥

बहु भूरि, द्रविणं धनम्, व्यययति उत्सृजति सत्पात्रेभ्यो ददातीत्यर्थः।

यं श्रयन्ति गुणग्रामः छन्त्यरिशिरांसि यः।
कीर्त्तयन्ति च गोष्ठीषु यद्गुणानप्सरोगणाः ॥ १२२ ॥
व्यथते प्रत्यहं मोहो यस्मान्व्यथन्ति चाऽरयः।
प्रथयन्ति सदा यञ्च गुणाः सर्व्वातिशायिनः ॥ १२३ ॥
न क्षुभ्यति बुभुक्षार्त्तः शीतार्त्तश्च न कम्पति।
यस्य राष्ट्रे धनाढ्यो वा मृतः कोऽपि न कुथ्यति॥१२४॥

अत्राह कामन्दकः, 'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं ततः। आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम् ॥ इति ॥ १२१ ॥

गुणग्रामः दयादाक्षिण्यादिसद्गुणसमूहः, यं राजानं, श्रयन्ति सेवते समाश्रयतीति यावत्। छन्त्ति छिनत्ति। अप्सरोगणा उर्व्वशीमेनकाद्या दिव्याङ्गनाः, यदुक्तं वह्निपुराणे, 'उर्व्वशी मेनका रम्भा मिश्रकेशी अलम्बुषा। विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा। भानुमत्यबला वर्णा द्वादशाप्सरसः शुभाः' ॥ इति। गोष्ठीषु सभासु, 'गोष्ठी सभायामालापे' इति विश्वः। यद्गुणान् कीर्त्तयन्ति उच्चैर्गायन्ति ॥ १२२ ॥

यस्मात् मोहः अज्ञानं, व्यथते अपगच्छति। अरयः शत्रवः, यस्मात् राज्ञः, व्यथन्ति अपसरन्ति तद्भयात् पलायन्त इत्यर्थः। सर्व्वान् अतिशाययन्ति पराभवन्तीति सर्व्वातिशायिनः अनन्यसाधारणा इत्यर्थः, गुणाः शौर्य्यादयः, यं राजानं, प्रथयन्ति विशिषयन्ति भूषयन्तीति यावत् ॥ १२३ ॥

बुभुक्षार्त्तः क्षुधापीडितो जनः, न क्षुभ्यति क्लिश्यति। शीतार्त्तः शीतपीडितश्च जनः, न कम्पति क्लिश्यति। यतो राजा यत्नेन क्षुधितानां अन्नेन शीतार्त्तानां कम्बलवसनदानेनेत्यर्थः। धनाढ्यो जनः, न कुथ्यति परान् क्लिश्नाति, राजदण्डभयाद्धनवान् दुर्बलान् नाऽभिभवतीति भावः। मृतः कोऽपि न कुथ्यति पूतिगन्धमावहति, अनाथानां मृतानां राजैवाऽन्त्येष्टिं करोतीति भावः ॥१२४॥

विचारयति यो धर्म्मं विद्वद्भिर्ब्राह्मणैः सह।
विचारयत्यस्य लोके शरच्चन्द्रोज्ज्वलं यशः॥ १२५॥

अविद्यानिद्रयाक्रान्ते जगत्येकः स चेतति।
धिया चेतयते सर्व्वं परस्य हृदये स्थितम्॥ १२६॥

यो भुजाभ्यां भुवो भारं भरते भरतोपमः।
बिभर्त्ति च यशोराशिं भूयांसं यस्य भूरपि॥ १२७॥

यस्य रोषारुणा दृष्टिर्धावते यत्र मानवे।
पाशपाणिस्ततस्तस्मिन् यमदूतोऽभिधावति॥ १२८॥

शास्त्रेण क्षोभते भूयो लघुप्रकृतिको नरः।
न क्षुभ्नाति महात्माऽसौ न क्षुभ्नोत्यचलस्ततः॥ १२९॥

प्राणिङ्क्ते दक्षिणीयानां विप्राणाञ्चरणेषु यः।
यत्पादौ मौलिरत्नांशुजालैर्नेनेक्ति राजकम्॥१३०॥

अविद्या अज्ञानं, सैव निद्रा चैतन्यनिमीलनात् निद्रास्वरूपिणीत्यर्थः, तया आक्रान्ते अभिभूते जगति, एकः केवलः, स चेतति जागर्त्ति, ज्ञानचक्षुषा सर्व्वं पश्यतीत्यर्थः। १२६।

भरतोपमः दुष्मन्तात्मजभरतराजसदृशः, यद्वा मनुतुल्यः, यदुक्तं वायुपुराणे, 'भरणात् प्रजानां वै मनुर्भरत उच्यते। निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम्।' इति। भरते धारयति। १२७।

यस्य राज्ञः, रोषारुणा क्रोधताम्रा, दृष्टिः यत्र मानवे मनुष्ये, धावते निपतति। पाशपाणिः रज्जुहस्तः, यमदूतः तस्मिन् मनुष्ये इति शेषः, अभिधावति, कुपितः सन्नयं रिपुकुलमुन्मूलयतीति भावः। १२८।

दक्षिणामर्हन्तीति दक्षिणीयाः, यज्ञे ब्रह्मभोजनादौ पूजिताः महानुभावाः इत्यर्थः, तेषां चरणैः पादैः, प्राणिङ्क्ते आत्मानं पुनाति। राजकं नृपसमूहः,

मिलन्ति प्रत्यहं यस्य वाजिवारणसम्पदः ।
मीलन्ति रिपुनारीणां मुखपद्मवनानि च ॥ १४५ ॥
यस्य व्याघोटते दण्डो नाकृतार्थः कृतश्चन ।
व्याघुटन्ति विपक्षाश्च यत्सम्मुखमुपागताः ॥ १४६ ॥
यो वाग्मी वादिनां मध्ये वाचमुच्चैः प्रपद्यते ।
प्रपद्ययन्ति यत्कीर्तिं दिङ्मुखेषु महाजनाः ॥ १४७ ॥
यस्य न्यायार्जितैर्वित्तैः पूज्यमाना दिने दिने ।
तुष्यन्ति ब्राह्मणा नित्यं तूषन्ति कुलदेवताः ॥ १४८ ॥
मनो नोद्विजते यस्य ददतोऽर्थमहर्निशम् ।
उद्विजन्ति च संसारादसारात्तत्त्ववेदिनः ॥ १४९ ॥
नेदते न परं कञ्चित् स्वामी यः समदर्शनः ।
तं निन्दति परीवादं परस्य विदधाति यः ॥ १५० ॥

वाजिनो घोटकाः, वारणाः करिणः, सम्पदो धनरत्नानि च, यद्वा वाजिवारणरूपाः सम्पदः । मिलन्ति एकत्र संहता भवन्ति ॥ १४५ ॥

यस्य राज्ञः, दण्डः अकृतार्थः विफलः सन्, न व्याघोटते प्रत्यावर्तते, सम्प्रणीतं दण्डं न कोऽप्यतिवर्तितुं समर्थः । व्याघुटन्ति पलायन्ते ॥ १४६ ॥

प्रपद्यते विवृणोति उदीरयतीति यावत् । प्रपद्ययन्ति घोषयन्ति ॥ १४७ ॥

कुलदेवताः गृहदेवताः, 'कुलान्वीयमाने गोत्रे गृहेऽपि कथितं कुलम्' इति विश्वः ॥ १४८ ॥

उद्विजन्ति विरज्यन्ते । तत्त्ववेदिनः ब्रह्मज्ञानसम्पन्नाः ॥ १४९ ॥

नेदते निन्दति, णिद निन्दायामित्यस्य भौवादिकस्य प्रयोगः । समदर्शनः सर्वत्र समदृष्टिः, विचाराद्विकारी कर्म विना परीवैविमेददर्शितइति यावत् ।

पितॄन् पूरयति श्राद्धे हव्यकव्यैश्च यः सदा ।
पूर्यन्ते पितरस्तस्य प्रसादैरुदितोदितम् ॥ १५१ ॥
न प्रगल्भायते मिथ्यावचनैर्यः कदाचन ।
आजौ प्रगल्भते दोर्भ्यां द्विषां विघटयन् घटाः ॥ १५२ ॥
प्रकाशते यथा व्योम्नि चन्द्रः संपूर्णमण्डलः ।
प्रकाश्यते तथा भूमौ प्रजानां नयनोत्सवः ॥ १५३ ॥
यज्ञस्याऽन्ते द्विजातिभ्यो दातुं क्षम्यति यो धनं ।
चैत्यदेवकुलव्याजाद्यशस्तर्पयतीव यः ॥ १५४ ॥
विनाऽपराधमारण्यान् न खेटति मृगानसौ ।
खेटयत्यरिवीरांश्च संग्रामरसिकान् नृपः ॥ १५५ ॥

परीवादम् अपवादम् । १५० ।

उदितोदितं शास्त्रं पठितमिति यावत् । १५१ ।

आजौ युद्धे, द्विषां रिपूणां घटाः समूहान्, विघटयन् विश्लेषयन्, प्रगल्भते प्रभुत्वमभिमानमाविष्करोतीति । १५२ ।

नयनोत्सवः नयनानन्दकरः । प्रकाश्यते विभाति । १५३ ।

चैत्यदेवकुलव्याजादिति । चैत्येषु देवागारेषु यानि देवकुलानि प्रतिष्ठितदेवरूपाणि, तद्व्याजात् तदपदेशेन, यद्वा, चैत्यानि वृक्षस्थानानि, देवकुलानि देवगृहाणि, तद्व्याजात्, सजातीयगणे गेहे नरेऽपि कथितं कुलमिति विश्वः । यशः कीर्त्तिं, तर्पयति दीपयति, चैत्यदेवप्रतिष्ठाव्यपदेशैर्नैजीं कीर्त्तिमर्पयतीति भावः । १५४ ।

विनाऽपराधमित्यादिनाऽस्य मृगयाव्यसनराहित्यं विवक्षितम्, तथाचोक्तं, 'वर्जयेत सुरापानं मृगयां वर्जयेत् सदा' इति । खेटयति हन्तीत्यर्थः । १५५ ।

निःशेषयति यः शत्रून् शेषदीर्घभुजध्वजः ।
निःशेषयति दानेन भाण्डागारं दिने दिने ॥ १६१ ॥

सुलभं यत्र भुञ्जन्ति यद्देशे वर्णिनो द्विजाः ।
प्रोञ्छन्ति प्रचुरैर्येषामन्नेन हीनतां प्रजाः ॥ १६२ ॥

उद्भ्राम्यन्ति परं लोके ये भिक्षाव्रतचारिणः ।
न दीना दुःखिताः केचिद्भ्रमन्ति यस्य मण्डले ॥१६३॥

न ध्वाङ्क्षति जनः कश्चिन्नाकाङ्क्षति परस्त्रियम् ।
सर्व्वोऽपि धार्म्मिकस्तुष्टस्तस्य राष्ट्रे स्थितो जनः ॥ १६४ ॥

---

दीर्घिकायां वा वर्षेषु वा । न विद्योतो भवेत्तस्य शुभपक्षोपतिः कृतः । याव-रङ्गदवैतानैर्मङ्गलिकधुरं विन' ॥ इति ॥१६०॥

शेषस्य अनन्तस्य, दीर्घौ भुजध्वजौ बाहुदण्डौ यस्य, महाबाहुरित्यर्थः । 'भुजे भुजङ्गेन्द्रसमानसारे' इति रघुः । शत्रून् निःशेषयति उन्मूलयति । भाण्डागारं धनागारं, दानेन, निःशेषयति शून्यं करोति ॥ १६१ ॥

यत्र देशे यदीयराष्ट्रे, वर्णिनो द्विजाः सवर्णाः ब्राह्मणाः, सुलभम् अनायास-लभ्यं, यत् भक्ष्यमिति शेषः, भुञ्जन्ति उपभुञ्जन्ति । एषां द्विजानां, प्रचुरैः बहुलैः तेन अन्नेन, प्रजाः जनसमूहः, हीनतां दारिद्र्यं, प्रोञ्छन्ति त्यजन्ति । प्रोञ्छ-न्तीति प्रपूर्वकस्य तौदादिकस्य उञ्छ धातो रूपस्य प्रयोगः । प्रेच्छन्तीति पाठसं-पुस्तकस्थपाठो न साधुः ॥ १६२ ॥

लोके तदीयराष्ट्रे, ये भिक्षाव्रतचारिणः भिक्षाभुजो ब्राह्मणाः, ब्रह्मचारिणः इत्यर्थः, ते परं अतिशयम्, उद्भ्राम्यन्ति दीप्यन्ते, धनबाहुल्येन प्रचुरैः भिक्षा-न्नैः सुखं जीवन्तीति भावः । भिक्षाभुक्त्वेन ब्रह्मचारिणां वृत्तिमाह मनुः,— 'भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती । भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता' ॥ इति ॥ १६३ ॥

ध्वाङ्क्षति कठोरं रौति, आक्रोशं करोतीत्यर्थः । ध्वाक्षि घोरवाशिते इत्यस्य

उद्वहते न कस्माऽपि गर्व्वं गर्व्वपरायणः।
उद्घट्टयति गोष्ठीषु सर्व्वेषामेव यो गुणान् ॥१६५॥
तेपन्ते यस्य वक्त्रेन्दोर्वीक्ष्याऽऽयतविन्दवः।
यं वीक्ष्य तेपते स्त्रीणां वपुः स्मरशराहतम् ॥१६६॥
क्षमते यो दरिद्राणां दुष्टान् न क्षमति प्रभुः।
न क्षाम्यति क्षितीशानामपराधकथामपि ॥१६७॥
तितिक्षते क्षमी यस्तु सापराधेषु साधुषु।
तेजयन्ति समाक्रम्य सर्व्वदा च सतां गिरम्॥१६८॥
यस्य योगनिमग्नस्य भोगतृष्णा क्षयायते।
क्षयते दीर्घसंसारग्रन्थिरात्मविनिश्चयात्॥१६९॥

---

भीवादिकस्य प्रयोगः। १६४।

उद्धहते उत्क्षिपति। गोष्ठीषु सभासु, सर्व्वेषां गुणान्, उद्घट्टयति विवृणोति, सर्व्वएव तत्सकाशात् गुणानुरूपां पूजां लभन्तइतिभावः। १६५।

यस्य वक्त्रेन्दोः मुखचन्द्रात्, आयत्ताऽऽयतविन्दवः कान्तिसुधाकणिकाः, 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते'। इति भूपालः। तेपन्ते क्षरन्ति। तेप क्षरणे इत्यस्य प्रयोगः। वपुः शरीरं, स्मरशराहतं कामबाणपीडितं सत्, तेपते वेपते। १६६।

तितिक्षते क्षमते, तिज निशानक्षमयोः इत्यस्य प्रयोगः। सतां साधूनां, गिरं वचनम् उपदेशमितियावत्, समाक्रम्य अभिभूय, साधुवाक्यस्य प्रतिकूलाचरणं कृत्वेतिभावः, यं राजानं, तेजयन्ति तीक्ष्णं कुर्व्वन्ति जना इति शेषः। तत्पक्षप्रतिपक्षेष्वसमतितीक्ष्णो भवतीति भावः। १६८।

भोगतृष्णा उपभोगवासना, क्षयायते क्षयुर्भवति। आत्मविनिश्चयात् ब्रह्मानुसन्धानात्, दीर्घसंसारग्रन्थिः प्रभावभवपर्य्यरूप सुदृढं बन्धनं, क्षयते शिथिलीभवति।१६९।

विश्राणयति यः श्रीमान् विप्रेभ्यो विपुलं वसु।
वितरन्ति च तेऽप्यस्मै सत्यवाचः सदाशिषः ॥ १७० ॥
व्यायामकठदेहोऽपि मन्यते यो न सुन्दरः।
मन्दायते क्वचित् कार्य्ये प्रारब्धे च न कर्हिचित् ॥१७१॥
अपमृत्युं परित्यज्य सुखं प्राणिति यत्प्रजा।
न प्राण्यते पुरं तस्य प्रतिकूलं करोति यः ॥ १७२ ॥
यो न लुम्पति पूर्व्वेषां स्थितिं राज्ञां तदाज्ञने।
पातुं लुप्यति लावण्यं नेत्राञ्जनपुटेन यः ॥ १७३ ॥
दधते यः सदाचारं सदाचारैश्च संस्तुतः।
दधते शासनं यस्य शिरसा च नरेश्वराः ॥ १७४ ॥

वसु धनं, 'वसु तोये धने मणौ' इति वैजयन्ती। विश्राणयति ददाति, 'त्यागो वितरणं दानमुत्सर्जनविसर्जने। विश्राणनं वितरणम्' इत्यमरः। आशिषः आशीर्व्वादान्, वितरन्ति ददति। सत्यवाचइत्यनेन तेषामाशिषाम् अमोघत्वं सूचितम्। १७०।

मन्दायते अलसो भवति। मन्दशब्दात् भृशादित्वात् क्यङ्। १७१।

प्राणिति जीवति। यस्तस्य प्रतिकूलं करोति विप्रियमाचरति, तस्य राज्ञः, पुरं नगरं, न प्राण्यते विद्यते, रिपुपुरं भस्मसात् करोतीति भावः। १७२।

पूर्व्वेषां राज्ञां रघुप्रभृतीनां, स्थितिं मर्य्यादां व्यवस्थितिं वा इत्यर्थः, तदाज्ञने तस्य भुवो, न लुम्पति उच्छिनत्ति, पूर्व्वराजकथानुसारवर्त्तीत्यर्थः। यद्वा, प्राचीनराजवंश्याधिकारम् उच्छेत्तुं न चाहति। लावण्यं सौन्दर्य्यं, रमणीनां पश्यति वा इत्यर्थः, पातुम् आस्वादयितुं, लुभ्यति लालसीभवति। १७३।

सदाचारैः साधवः वन्दिभिः चारणैः, यद्वा, राजधर्मानुमोदितैः

यो न वञ्चयति किञ्चित् सदा सत्यपरायणः ।
वञ्चन्ति च शरच्चन्द्रं यशसो दिक्षु तद्गुणाः ॥ १७९ ॥
होमाग्निधूमसुरभिः पवते मारुतो मृदुः ।
गोदावरीतरङ्गार्द्रः पुनाति भुवि यत्प्रजाः ॥ १८० ॥
यो मिमीते च मीमांसां तदर्थमनुतिष्ठति ।
पशवोऽपि न मीमन्ति यद्देशे दुःखपीडिताः ॥ १८१ ॥
सुखं क्षयति प्रातीयमिव पुत्रेष्वव कर्षति ।
यत्प्रसादादविज्ञातक्लेशो जनपदः सदा ॥ १८२ ॥
शीकन्ते शीकरैः सर्व्वे वायवो दधिपोदधेः ।
चन्द्रावतीतरङ्गार्द्राः शीकयन्ति च यद्वपुः ॥ १८३ ॥

---

वञ्चयते प्रतारयति । वञ्चन्ति गच्छन्ति, सादृश्येन प्राप्नुवन्तीत्यर्थः । यशसो-निर्म्मलाः ॥ १७९ ॥

मीमांसा नाम विचारपूर्व्वकतत्त्वनिर्णायकः ग्रन्थभेदः । मीमांसा च द्विविधा कर्म्ममीमांसा ब्रह्ममीमांसा चेति । कर्म्मकाण्डवेदविचारग्रन्थः कर्म्ममीमांसा जैमिनिप्रणीता, सैव मीमांसात्वेन प्रसिद्धा पूर्व्वमीमांसा इत्युच्यते । ब्रह्मकाण्ड-वेदविचारग्रन्थश्च ब्रह्ममीमांसा वेदव्यासादिप्रणीता, सा वेदान्तत्वेन प्रसिद्धा उत्तरमीमांसा इत्युच्यते । मिमीते अवधारयति । तदर्थं मीमांसोदितकर्म्मादि अनुतिष्ठति सम्पादयति । मीमन्ति शब्दायन्ते आर्त्तनादं कुर्व्वन्तीत्यर्थः ॥ १८१ ॥

प्रातीयं प्राक्प्रवेशम् । जनपदो देशः, देशवासी जनसमूह इति यावत् ॥ १८२ ॥

सर्व्वे वायवः, दधिपोदधेः दधिसमुद्रस्य, शीकरैः जलकणाभिः, शीकन्ते सिक्ता भवन्ति, शीक सेके इत्यस्य प्रयोगः । चन्द्रावतीतरङ्गार्द्राः चन्द्रावती-वीचिविक्षोभशीतलाः, वायव इति शेषः, यद्वपुर्यस्य राज्ञः शरीरं, शीकयन्ति सिञ्चन्ति ॥ १८३ ॥

अमन्ति व्याधयोऽप्येनं न कदाचिद्भयादिव ।
आमयन्ति यमन्यञ्च तमुल्लाघं करोत्यसौ ॥ १९० ॥
वेवेष्टि विष्टपं सर्व्वं कीर्त्तिर्य्यस्याऽतिशायिनी ।
विष्णाति विषवत् प्राणान् त्रयीधर्म्मद्विषामसौ ॥१९१॥
निःशेषं शेषति क्रोधात् प्रतिपक्षक्षमापतीन् ।
एकः शेषति योऽशेषभूतानां भरणे ध्रुवम् ॥ १९२ ॥
क्षिपति प्रतिपक्षाणां हृदये यो भयं ध्रुवम् ।
क्षिप्यति श्रोत्रियाणाञ्च निष्कं पुष्कलमालये ॥ १९३ ॥

---

भवन्ति ॥ १८९ ॥

व्याधयो रोगाः, एनं राजानं, न अमन्ति गच्छन्ति अभिभवन्तीति यावत् । यम् अन्यञ्च जनम्, आमयन्ति पीडयन्ति, व्याधय इत्यनुषङ्गः । असौ राजा, तं व्याधितं जनम्, उल्लाघम् अतिक्रमणीयं व्याधिनिर्मुक्तमितिभावः, करोति ॥ १९० ॥

यस्य राज्ञः, अतिशायिनी सर्व्वातिरिक्ता, अनन्यसाधारणेत्यर्थः, कीर्त्तिः, विष्टपं भुवनं, वेवेष्टि व्याप्नोति । क्र्यादिगणीयस्य विषधातोः प्रयोगः । असौ राजा, त्रयीधर्म्मद्विषां वेदत्रयोदितधर्म्मविघातकानां, प्राणान्, विषवत् विषमिव, विष्णाति वियोजयति संहरतीति यावत् ॥ १९१ ॥

प्रतिपक्षक्षमापतीन् प्रतिकूलान् राज्ञः, निःशेषं शेषति समूलम् उन्मूलयति । एकः अन्यसाहाय्यनिरपेक्ष इत्यर्थः, अशेषभूतानां निखिलप्रजानां, भरणे, शेषति शेषत्वमाचरति । यथा एक एव अनन्तः सकलधराभारं बिभर्त्ति तथा सोऽपि राजेतिभावः ॥ १९२ ॥

श्रोत्रियाणां छान्दसानाम्, आलये गृहे, पुष्कलं प्रचुरं, श्रेष्ठं वा, यद्वा चतुःषष्टिसुवर्णपरिमितं, यदुक्तं,—'चतुःषष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्' इति । निष्कं सुवर्णं, क्षिप्यति ददाति ॥ १९३ ॥

सुखं निंस्ते मुखं स्त्रीणां यत्प्रजा प्रतिपालिता ।
निक्षति स्तनकञ्चोलकपोलाक्षिगलादिकम् ॥ १९९ ॥
दृष्ट्वैव यं विघटते कोपाक्षेपो मृगीदृशाम् ।
विघाटयति चास्फोटे वैरिणां करिणां घटा ॥२००॥
निस्तनन्ति न दुःखार्त्तास्तद्देशे निरुपद्रवे ।
स्तनयत्युग्रशब्देन पर्जन्योऽपि न भीतवत् ॥ २०१ ॥
रसन्ति मधुरैः कण्ठैर्यस्योद्याने पतत्रिणः ।
रसयन्ति सुखाद्यानि तत्करप्रतिपालिताः ॥ २०२ ॥
लज्जते मञ्जिकास्पर्शे क्षत्रियस्त्रीप्रियोऽप्यसौ ।
लज्जते लञ्जिकानाञ्च वार्त्ता कर्णगता पुनः ॥ २०३ ॥

---

कुटुम्बकम्' इति भावः । सम्पद्यते इति हस: सम्पूर्वकत्वात् आत्मनेपदं, विव-क्षावशादकर्मकत्वञ्च । १९८ ।

निंस्ते चुम्बति, निसृधातोः प्रयोगः । निक्षति चुम्बति ॥ १९९ ।

मृगीदृशां हरिणनयनानां, कोपाक्षेपः मानाख्यकोपकृतं तर्जनं, विघटते अपसरति। आस्फोटे यस्य बाहुशब्दे सति, वैरिणां करिणां घटा रिपुगज-समूहः, विघाटयति पलायते । २०० ।

निस्तनन्ति नदन्ति आर्त्तनादं कुर्वन्तीत्यर्थः। स्तनयति गर्जति। पर्जन्यः मेघः। भीतवत् राजशब्दश्रवणेन शङ्कितइव । २०१ ।

पतत्रिणः पक्षिणः, मधुरैः श्रोत्राभिरामैः, कण्ठैः, रसन्ति कूजन्ति। तत्करप्रतिपालिताः सर्वे जनाः, सुखाद्यानि सुमिष्टान्नभोजनानि, रस-यन्ति आस्वादयन्ति। 'चक्ष्याणि तत्करप्रतिचारिताः' इत्यादर्शपुस्तकपाठो न समञ्जसः । २०२ ।

लञ्जिका वेश्या, तत्स्पर्शे तत्संसर्गे। लञ्जिकानां वेश्यानां, वार्त्ता संवादः,

यत्र चञ्चयति व्यूहं प्रतिपक्षक्षमाभुजि ।
लभतेऽर्थं ततो भूमिं हेमहस्त्यश्ववादिकम् ॥ २०८ ॥
स्त्रियं दृष्टाऽपि मयूर्यां न प्रहर्षति यस्तथा ।
यथा प्रहर्षति श्रुत्वा सत्कवीनां सुभाषितम् ॥२०९॥
धर्मे सर्व्वस्वदानेऽपि यस्य ह्रीयायते न धीः ।
ह्रीयत्यरिवर्गस्य जीवितायाय यः सदा ॥ २१०॥
याचते वाहिनीं हन्तुं बाहुभ्यामाहवेषु यः ।
वहते विहतारातिर्बहुरूपस्य यः श्रियम् ॥ २११ ॥
खेदते किल सर्व्वोऽपि वपुष्माननुष्णरश्मितः ।
न च खिद्यति तस्याङ्गं व्यायामार्जितमेदसः ॥ २१२ ॥

---

यत्र प्रतिपक्षक्षमाभुजि यस्मिन् शत्रुभूपाले, व्यूहं सुरचितं सैन्यं, चञ्चयति चञ्चलं चञ्चलायमानं प्रेरयति, रणकोलाहलकारि सैन्यं प्रेरयतीत्यर्थः। ततः प्रतिपक्षात् राज्ञ इत्यर्थः। चञ्चयतीति प्रेरणार्थे णिजन्तस्य चञ्च शब्दे इत्यस्य प्रयोगः ॥ २०८ ॥

सर्व्वस्वस्य दानं यत्र तादृशेऽपि धर्मे सर्व्वस्वदक्षिणे विश्वजिदादौ यज्ञे, यस्य धीः बुद्धिः, न ह्रीयायते ह्रीरिव आचरति, सर्व्वस्वं ददामि न वेति चिन्ताकुला न भवतीत्यर्थः, यज्ञान्तरेष्विव मनसा सर्व्वस्वमुत्सृजतीति भावः ॥ २१० ॥

वाहिनीं सेनां। याचते प्रयतते, याच प्रयत्ने इत्यस्य प्रयोगः। विहतारातिः विनाशितशत्रुः, सो राजा, बहुरूपस्य विष्णोः, श्रियं सम्पदं, वैकुण्ठतुल्यभां लक्ष्मीमित्यर्थः, यद्वा, बहुरूपस्य कामदेवस्य श्रियं शोभां रूपमिति यावत्, वहते धारयति ॥ २११ ॥

सर्व्वोऽपि वपुष्मान् शरीरी, अनुष्णरश्मितः सूर्य्यात्, आतपतापादित्यर्थः, खेदते घर्म्मार्त्तदेही भवति। खिद्यति घर्म्मार्त्तं भवति ॥ २१२ ॥

भक्तिचित्राणि वस्त्राणि व्यूयन्ते यत्र कौतुकात् ।
वैज्ञानिका वयन्ते च पट्टिकोत्पाटिकादिकम् ॥ २१३ ॥
वाति वातः पुरे यत्र तावन्मात्रेण शीतवत् ।
उद्वायति यथा स्त्रीणां स्वेदार्द्रं सुरते वपुः ॥ २१४ ॥
ऊर्जन्ति विविधाभिश्च वृत्तिभिर्यत्र वाजिनः ।
ऊर्जयन्ति च दानेन सम्मानेन पदातयः ॥ २१५ ॥
आयच्छति रवौ मौर्वीमसौ यावद्विभित्सया ।
तावदाच्छति सम्पूर्णां नम्रतां भूमिपद्धतिः ॥ २१६ ॥

---

भक्तिः रचना, तया चित्राणि मनोहराणि । व्यूयन्ते वयन्ति, अत्र तन्तुसन्ताने इत्यस्य विपूर्वस्य प्रयोगः । वैज्ञानिकाः शिल्पनिपुणाः । पट्टिका पट्टं कौषेयमिति यावत्, उत्पाटिका इत्यस्य नीरसा त्वक्, सत्त्वदूषकनिरोधकत्वेऽपि वचनस्य चातुर्विध्यात्, यदुक्तं, 'चतुर्विधं तु विज्ञेयं वचनमुत्तमनिरोधनम्' इति । वयन्ते इति वेञ् तन्ताने इत्यस्य प्रयोगः ॥ २१३ ॥

यथा वायता वायुना, सुरते रतिक्रीडायां, स्वेदार्द्रं घर्मवारिक्लिन्नं, वपुः शरीरं, उद्वायति शुष्यति । उद्वायतीति ओवै शोषणे इत्यस्य उत्पूर्वस्य प्रयोगः । 'स्वाङ्गलग्नविषयाणि कुसुमस्तबकाभरणान् । न वाति वायुस्तत्पार्श्वे तालवृन्ता-निलाधिकम् ।' इति कुमारः ॥ २१४ ॥

ऊर्जन्ति निजबलतेजःसम्पन्ना भवन्तीत्यर्थः । ऊर्ज बलप्राणनयोरित्यस्य चुरादिगणीयस्य प्रयोगः । चुरादेः णेः वैकल्पिकत्वात् यथा चोरतीत्युदा-हरणं, तथा पक्षे ऊर्जतीति पदम् ॥ २१५ ॥

मौर्वीं धनुर्गुणम्, आयच्छति आयतां करोति । आच्छति आयता भवति, आछि आयामे इत्यस्य भौवादिकस्य प्रयोगः ॥ २१६ ॥

मोदयन्ते यदुद्याने मारुतं पुष्परेणवः ।
मत्तास्तं गन्धमाघ्राय मोदन्ते तत्पुरस्त्रियः ॥ २१७ ॥
यच्छिरायमनस्नानप्रायश्चित्तेन शुध्यति ।
अन्तः शुचीयते तस्य परमात्मविनिश्चयात् ॥ २१८ ॥
स्नाति गङ्गाजलैर्नित्यं देवे यत्र कपिध्वजम् ।
यः छादयति जगत् सर्वं विसतन्तुनिभैर्गुणैः ॥ २१९ ॥
यत्प्रजानामुपर्युच्चैः पर्जन्योऽपि न गर्ज्जति ।
गर्ज्जयन्ति कशाघातैर्भिद्यमानास्तु तस्कराः ॥ २२० ॥
दृढं धर्मे विलम्बस्य यस्य न व्ययते पदम् ।
व्ययति स्वर्गलोकाच्च न कीर्त्तिः सुकृतात्मनः ॥ २२१ ॥
स्वरति जिह्वया वाचा सर्व्वानानन्दयन्नसौ ।
स्वरयत्यतिदृष्टोऽपि न कदाचित् परिग्रहम् ॥ २२२ ॥

---

पुष्परेणवः कुसुमपरागाः, मारुतं वायुं, मोदयन्ते सुरभीकुर्व्वन्ति। मोदन्ते नन्दन्ति ॥ २१७ ॥

शुध्यति शुचिर्भवति। शुचीयते अशुचिः शुचिर्भवति। भृशादिगणमध्ये शुचिशब्दस्य पाठात् अभूततद्भावार्थे क्यङ्। परमात्मविनिश्चयात् ब्रह्मानुसन्धानात् ॥ २१८ ॥

विसतन्तुनिभैः मृणालसूत्रसदृशैः, अतिनिर्मलैः कोमलैश्च दयादाक्षिण्यादिभिरित्यर्थः। जगत् पृथिवीं छादयति वेष्टते, व्याप्नोतीत्यर्थः। वेष्टने इत्यस्य प्रयोगः ॥ २१९ ॥

यस्य पदं मर्यादा, न व्ययते गच्छति। सुकृतात्मनः पुण्यशीलस्य, यस्य कीर्त्तिः, स्वर्गलोकाच्च न व्ययति गच्छति अपगच्छतीति यावत् ॥ २२१ ॥

स्वरति कथयति वाचयतीति यावत्। परिग्रहं परिजनं, न स्वरयति अधिक्षिपति भर्त्सयतीति यावत्, स्वरयतीति स्वर आक्षेपे इत्यस्य चरमस्य

समन्ति यद्वियोगेन सीमन्तिन्यः स्मरातुराः ।
यः सामयति सामज्ञः स्निग्धैरालोकनैश्च ताः ॥२२३॥
हिताहितं प्रजानां यः प्रेक्षते नित्यमात्मना ।
प्रेक्षयत्यखिलानाञ्च कार्य्यसिद्धिं नियोगिनाम् ॥२२४॥
अभिलष्यति साधूनामुदयं सर्व्वतोदयः ।
साधुलोकोऽपि निःसीमां तस्याऽभिलषते श्रियम् ॥२२५॥
कायः क्लाम्यति नाक्रन्दे यस्य प्रहरतो रिपून् ।
क्लामन्ति रिपुसैन्याश्च प्लवमाना दिशो दश ॥ २२६ ॥
यः स्वप्नेनाऽपि नात्मीयं गुणं कुत्राऽपि कत्थते ।
कथयत्यादिराजानां चरितानि सहस्रशः ॥ २२७ ॥

---

चुरादिगणीयस्य प्रयोगः । २२२ ।

यद्वियोगे यस्य राज्ञः विरहे, सीमन्तिन्यः कामिन्यः स्मरातुराः कामपीड़िताः सत्यः, समन्ति विक्लवा भवन्ति । शम वैक्लव्ये इत्यस्य प्रयोगः । सामज्ञः प्रियवचनरचनाचतुरः, मानिनीमानविघातदक्षः इति भावः, यदुक्तं साहित्यदर्पणे, 'तत्र प्रियवचः साम' इति । स्निग्धैः मधुरैः, आलोकनैः वीक्षितैः, ताः विरहातुराः सीमन्तिनीः, सामयति सान्त्वयति । साम सान्त्वने इत्यस्य प्रयोगः ।२२३। आत्मना स्वयम् । नियोगिनां रक्षादिकार्य्ये नियुक्तानाम् । २२४ ।

आक्रन्दे दारुणयुद्धे, 'आक्रन्दः क्रन्दने त्राणे मित्रदारुणयुद्धयोरिति मेदिनी । रिपून् शत्रून्, प्रहरतः निघ्नतः, यस्य राज्ञः, कायः शरीरं, न क्लाम्यति क्लान्तीभवति । प्लवमानाः पलायमानाः । २२६ ।

कत्थते श्लाघते प्रशंसतीति यावत् । कथयति कीर्त्तयति । कत्थते इति कत्थ श्लाघायामित्यस्य प्रयोगः । २२७ ।

व्यनक्ति यच्छरीरस्थं लक्षणं सार्व्वभौमताम् ।
व्यञ्जयन्ति च गोदानं यद्देशे याजिका द्विजाः ॥२२८॥
आस्फोटन्ति नखैरङ्गं सुखमास्फोटयन्ति च ।
यद्व्यूहकृतवैधव्या रुदत्योऽरिकुलस्त्रियः ॥ २२९ ॥
सम्पाशयति यः शत्रून् शृङ्खलैरखिलानपि ।
विपाशयति चात्मानं ज्ञानं कर्म्मक्षयं नयन् ॥२३०॥
घूर्णते शात्रवस्याऽपि यद्गुणश्रवणाच्छिरः ।
मित्रोदासीनभूतानां घुणतीति किमद्भुतम् ॥२३१॥

---

सार्व्वभौमता चक्रवर्त्तिता, व्यनक्ति सूचयति, चक्रवर्त्तिलक्षणोपेतोऽसौ राजा इति भावः। याजिकाः यज्ञशीलाः, द्विजाः ब्राह्मणाः, गोदानं केशान्तनामकसंस्कारं, यद्वा यज्ञे धेनुदानरूपं कर्म्म, व्यञ्जयन्ति द्योतयन्ति, यथाशास्त्रं सम्पादयन्तीत्यर्थः ॥ २२८ ॥

नखैः नखाघातैः, अङ्गं शरीरं, आस्फोटन्ति, छिन्दन्ति, शोकोन्मत्ततयेति भावः। सुखम् आस्फोटयन्ति विनाशयन्ति। यस्य व्यूहेन सुरचितेन सैन्येन कृतं वैधव्यं विधवाया गतभर्त्तृकाया भावः, पतिविनाश इत्यर्थः, यासां ताः, अतएव रुदत्यः विलपनपराः ॥ २२९ ॥

सम्पाशयति बध्नाति। पश बन्धने इत्यस्य सम्पूर्व्वस्य प्रयोगः। आत्मानं जीवात्मानं, कर्म्मक्षयं शुभाशुभकर्म्मविनाशजन्यं, ज्ञानम् आत्मज्ञानमित्यर्थः, नयन् प्रापयन्, विपाशयति भवपाशात् मोचयति, आत्मानमितिशेषः ॥ २३० ॥

शात्रवस्य शत्रुभूतस्य। मित्रोदासीनभूतानामिति। कस्यचित् राज्ञः स्वराज्यसीमानन्तरमेव यस्य राज्यं स तस्य अरिः, तदनन्तरं तु यस्य राज्यं स शत्रुभूतस्य मित्रम्। उदासीनभूतस्तु शत्रुमित्राभ्यां परतरो राजा, विजिगीषोः शत्रुमित्रभूमितो व्यवहितः, व्यवहितत्वादेव नोपकारी नाप्यपकारी केवलं तूष्णीमासीन इव, तेषां शिरो मूर्द्धा, घुणति भ्रमति ॥ २३१ ॥

यस्य लक्ष्मीर्विकसति प्रजा धर्मेण रक्षितुः।
विकाशन्ते च भूयांसो गुणाः अवचकारिणः ॥ २१२॥
किलन्ति बालकाः कामं क्रीडन्ति स्थविरा अपि।
अज्ञातव्याधिदौर्गत्यविप्लवा यस्य मण्डले ॥ २१३ ॥
यः कुट्टयति शत्रूणां हृष्टो गजघटा रणे।
संकुटन्ति भयाक्रान्ताः शत्रवो यस्य दर्शनात् ॥ २१४ ॥
कृपते कृपणेष्वेव कृपाणार्जितविक्रमः।
प्रचुरं अर्थितोऽप्यर्थं नाऽसौ कृपयति प्रभुः ॥ २१५ ॥

---

धर्मेण राजधर्मं पुरस्कृत्य, प्रजाः प्रकृतीः, रक्षितुः पालयितुः, यस्य राज्ञः, लक्ष्मीः राजश्रीः, विकसति नितरां प्रकाशते वर्धते इति यावत्। अवचकारिणः अकर्कशमधुराः गुणाः दयादाक्षिण्यादयः, विकाशन्ते शोभन्ते। रक्षितुरित्यत्र रक्षिता इत्यादर्शपुस्तकपाठो न साधुः ॥ २१२ ॥

स्थविराः वृद्धाः। व्याधिः रोगः, दौर्गत्यं दारिद्र्यादिदुःखं, विप्लवः परचक्रपति-राजादितो भयं स्वराष्ट्रोपद्रवो वा, ते अज्ञाताः अननुभूताः यैः, ते तादृशाः। मण्डले सुविस्तृते राज्ये ॥ २१३ ॥

गजघटाः करिसमूहान्, कुट्टयति दलति विनाशयतीति यावत्। संकुटन्ति भयेन आकुञ्चितदेहा भवन्ति ॥ २१४ ॥

कृपणेषु कृपापात्रेषु अर्थिषु, कृपते दयते, कृपां प्रदर्शयतीति यावत्। कृपाणेन खड्गेन शौर्यसम्पदेतिभावः, अर्जितः विक्रमः पराक्रमः येन सः, भुजबलजन्यप्रतापसमर्थः। कृपयति दुर्बलो भवति। प्रचुरमपि अर्थं दातुमिति शेषः। 'कृपाणार्जितविक्रमः' इत्यत्र 'कृपणार्जितविक्रमः' इति आदर्शपुस्तकपाठो न साधुः ॥ २१५ ॥

अजस्रमम्बुभिः शत्रुस्त्रीणां धौतमिवाधिकम् ।
यद्यशः श्वेतते दिक्षु श्विन्दते च सुरालये ॥ २३६॥
कुशस्थलं पन्थयति पथयत्युत्तरापथम् ।
यत्खड्गखण्डिताशेषप्रचण्डरिपुमण्डलम् ॥ २३७ ॥
ह्रादते स्निग्धगम्भीरं यद्देशे वर्षुको घनः ।
ह्लादते शस्यलोभेन कृषीवलजनोऽप्ययम् ॥ २३८ ॥
ज्योत्स्नाच्छलेन मूर्च्छन्ति यद्गुणाः शशलाञ्छने ।
न तं स्फूर्छति यत्राऽसौ तुष्टः सहृदयः प्रभुः ॥ २३९ ॥
दुणोति द्रोणवद्युद्धे शरजालेन यो रिपून् ।
द्रुणाति प्रज्ञतो यस्य दिङ्मुखेषु रिपुव्रजः ॥ २४० ॥

---

अधिकम् अधिकतरं, श्वेतते शुक्लं भवति, स्वतः शुक्लस्यापि यशसो रिपुनारीनयनजलक्षालितत्वात् शौक्ल्याधिक्यं ज्ञेयम्। श्विन्दते श्वेतं भवति। श्वित-श्विन्दयोः शौक्ल्यार्थयोः प्रयोगः ।२३६।

कुशस्थलं कान्यकुब्जदेशम्। उत्तरापथम् उत्तरदिग्भागम्। पन्थयति पथयति चेति गच्छतीत्यर्थः, तत्र तत्र पलायत इति भावः । २३७ ।

वर्षुकः वर्षणशीलः, लषपतपदेत्यादिना उकञ्प्रत्ययः। घनो मेघः, स्निग्धगम्भीरं यथा स्यात् तथा ह्रादते गर्जति। कृषिरस्यास्तीति कृषीवलः, कर्षक इत्यर्थः, रजःकृष्यादिना वलच्प्रत्ययः, वले इति दीर्घः। ह्लादते आह्लादितो भवति । २३८ ।

सहृदयः सामाजिकः गुणग्राहीत्यर्थः, असौ प्रभुः राजा, यत्र यस्मिन् जने, तुष्टः, सोऽस्य प्रीतिकरं सत्कर्म करोतीत्यर्थः, तं जनं, न स्फूर्छति विस्मरति ।२३९।

द्रोणवत् द्रोणाचार्यवत्, शरजालेन बाणसमूहेन, रिपून् दुणोति उपतापयति। रिपुव्रजः शत्रुसमूहः, दिङ्मुखेषु दिगन्तरेषु, द्रुणाति गच्छति

लक्ष्मीमालिङ्गति स्नेहाद् यः सदा धरणीपतिः ।
आलिङ्गयति रत्नांशुजालेन मणिकुट्टिमम् ॥ २४१ ॥
रथान् सवति संग्रामे स्वयमेव जवेन यः ।
सोमं सुनोति यज्ञेषु परलोकजिगीषया ॥ २४२ ॥
मनो मादयते यस्य योगाभ्यासरसायनम् ।
सर्व्वलोकातिशायिन्या विभूत्या च न माद्यति ॥२४३॥
खिद्यति ज्ञातिवर्गेषु खेदयत्यरिबन्धुषु ।
रणे शूरयते यश्च शूर्य्यते विद्विषां बलम् ॥ २४४ ॥
यः शीलति सदा धर्म्मं शीलयत्यात्मनो हितम् ।
नच स्तमति शोकेन नच दुःखेन ताम्यति ॥ २४५ ॥

---

पलायतइत्यर्थः । २४० ।

मणिकुट्टिमं मणिमयबद्धभूमिं, रत्नांशुजालैः रत्नाभरणरश्मिभिः, आलिङ्गयति रञ्जयति । २४१ ।

संग्रामे युद्धे, रथान् सवति प्रेरयति । सु प्रेरणे इत्यस्य प्रयोगः । परलोकजिगीषया स्वर्गकामनया, यज्ञेषु सोमं यज्ञाङ्गभूतां सोमलतां, सुनोति निष्पीडयति, यज्ञे सोमलतां निष्पीड्य तद्रसं पिबतीत्यर्थः । षु अभिषवे इत्यस्य स्वादिगणीयस्य प्रयोगः । २४२ ।

योगाभ्यासरसायनं ब्रह्मानुसन्धानरूपं, महौषधं, यस्य मनः मादयते आनन्दयति । सर्व्वलोकातिशायिन्या लोकोत्तरया, विभूत्या सम्पदा, न माद्यति मत्तोभवति । २४३ ।

रणे युद्धे, शूरयते पराक्रमते । विद्विषां शत्रूणां बलं सैन्यं, शूर्य्यते विनाश्यति । २४४ ।

धर्म्मं शीलति अभ्यस्यति आलोचयतीति यावत् । शोकेन इष्टनाशादि-

छिनत्ति निस्त्रमाणं छेदयत्यहितोदयम् ।
ऋध्नोति धीः सदा यस्य ऋध्यति श्रीश्च भूतले ॥२४६॥
यः क्लेवति सतां मार्गं गवेषयति सत्क्रियाम् ।
यत् किञ्चिदध्यधीतेऽसौ यदध्येति तदव्ययम् ॥ २४७ ॥
आलोचते सदा नीतिमालोचयति सत्क्रियाम् ।
आलोकन्ते यमबला नालोकयति यश्च ताः ॥ २४८ ॥
यो न कुत्सयते कुत्सां न तु कुत्सति निर्धनम् ।
न भर्त्सयति बान्धवान् न तु भर्त्सयते परान् ॥२४९॥
मण्डयन्ति गुणाः सर्वं यो गुणानेव मण्डति ।
भूषणं भूषयत्यन्यं यस्तु भूषति भूषणम् ॥ २५० ॥
उन्मूलयति यः शत्रूनुन्मूलति तमांसि च ।
राष्ट्रं पीडति नात्मीयं पीडयत्यरिमण्डलम् ॥ २५१ ॥

---

...तेन, न स्तमति विक्लवो न भवति, स्तम वैक्लव्ये इत्यस्य प्रयोगः । २४५ ।

धीः बुद्धिः, ऋध्नोति वर्धते। श्रीश्च राजलक्ष्मीश्च ऋध्यति वर्धते। ऋध वृद्धौ इत्यस्य प्रयोगः । २४६ ।

सतां मार्गं सदाचारपद्धतिं, क्लेवते अवलम्बते। गवेषयति अन्वेषयति। गवेष मार्गणे इत्यस्य चुरादिगणीयस्य प्रयोगः । २४७ ।

मण्डयन्तीत्यादि। गुणाः शौर्यवीर्यदयादाक्षिण्यादयः, सर्वं जनं, मण्डयन्ति भूषयन्ति। यो राजा गुणानेव मण्डति भूषयति, गुणाः सर्वेषु उत्कर्षहेत-वोऽपि यत्र आधारगुणेन स्वयमेव उत्कर्षं लभन्ते इत्यर्थः। एवं यस्तु भूषण-मपि भूषति अलङ्करोतीत्यर्थः। 'अभ्यङ्गनेपथ्यमलञ्चकार' इति कुमारः । २५० ।

निवर्हयति बुद्ध्याऽरीन् तपसा यो निवर्हते ।
इहाऽर्हति च यः पूजां युद्धेऽपीन्द्रस्तमर्हति ॥२५२॥
भक्त्या नमति यो देवान् नमस्यति गुरून् द्विजान् ।
वेवेष्टि रोदसी कीर्त्त्या स्वधर्ममनुरुध्यते ॥ २५३ ॥
दिवा निद्रायते नाऽसौ न निद्राति च सन्ध्ययोः ।
न स्पृहयति परद्रव्यं नच गर्हयते परम् ॥ २५४ ॥
तूर्यते न क्वचित् कार्य्ये त्वरते धर्म्म एव यः ।
ध्वनन्ति यद्गुणान् मर्त्त्या ध्वनयन्ति च खेचराः ॥२५५॥
तर्जते योऽपि भूपालान् न तर्जयति सज्जनम् ।
न दुनोति परं वाचा दुर्जनोक्त्या न दूयते ॥ २५६ ॥

---

बुद्ध्या नीतिशास्त्रानुसारिण्या प्रज्ञया, अरीन् शत्रून् निवर्हयति विनाशयति । तपसा तपोबलेन, निवर्हते दीप्यते । इह लोके, पूजाम् सम्मानम्, अर्हति भजति । युद्धे, इन्द्रोऽपि स्वयं ईश्वरोऽपि, तं राजानम्, अर्हति पूजयति । २५२ ।

कीर्त्त्या यशसा, रोदसी द्यावाभूमी, वेवेष्टि व्याप्नोति । स्वधर्मं प्रजापालनरूपं राजधर्मम्, अनुरुध्यते सर्व्वप्रयत्नेन रक्षति । २५३ ।

सन्ध्ययोः सायं प्रातश्च, यदुक्तं,—'त्रियामा रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयीं । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते । इति । परद्रव्यं परधनं, न स्पृहयति लब्धुमिच्छति ॥ २५४ ।

तूर्यते त्वरते । ध्वनन्ति घोषयन्ति । मर्त्त्याः मानवाः । खेचराः नभोविहारिणः देवगन्धर्व्वादयः । २५५ ।

वाचा अप्रियवचनैरर्थैः, परं न दुनोति उपतापयति । दुर्जनोक्त्या दुर्जनवाक्येन च, न दूयते स्वयं दुःखितो न भवति । २५६ ।

न सूदते मतिर्यस्य यः सूदयति माधवम् ।
चिकित्सति जगद्व्याधिं साधु केतयति प्रजाः ॥२५७॥
सत्यं सङ्गिरते यश्च गृणाति सुभगं वचः ।
यो भुङ्क्ते भुवनं धर्म्मं यस्य धीर्न भुजत्यलम् ॥ २५८ ॥
पतन्ति यद्द्विषो दिक्षु दुरितञ्च पलायते ।
जहाति दुर्जनैः सङ्गं जिनीते सज्जनाश्रयम् ॥ २५९ ॥
लिनाति धर्म्मपथाऽसौ नेन्द्रियार्थेषु लीयते ।
जायन्ते यस्य सत्पुत्रा जयन्ति च गुणोदयाः ॥ २६० ॥
यः पृथ्वीं पाति पायन्ति यत्प्रभावाच्च शत्रवः ।
चित्तं रजति नारीणां स्वयं ता अनुरज्यते ॥ २६१ ॥
रहत्यविदुषां सङ्गं रहयत्यप्रियं सदा ।
कीर्त्तिर्भ्राम्यति यस्योर्व्यां गुणाः स्वर्गे भ्रमन्ति च ॥२६२॥

---

यस्य मतिः बुद्धिः, न सूदते क्षरति । माधवं रिपुकुलं, सूदयति विनाशयति ॥ २५७ ॥

सत्यं सङ्गिरते प्रतिजानीते । सुभगं वचः मधुरं वाक्यं, गृणाति उदीरयति । धर्म्मं यस्य धीः बुद्धिः, न भुजति, कुटिला भवति, सरलात्मना धर्म्मं सेवते इत्यर्थः, भुज कौटिल्ये इत्यस्य तौदादिकस्य प्रयोगः । २५८ ।

यद्द्विषः यस्य शत्रवः, दिक्षु पतन्ति गच्छन्ति पलायन्त इत्यर्थः । दुरितं पापं पलायते अपसरति । सज्जनाश्रयं साधुसङ्गं, जिनीते प्राप्नोति । २५९ ।

पृथ्वीं धरणीं,पाति रक्षति । यत्प्रभावात् यस्य प्रतापेन,शत्रवः,पायन्ति शुष्यन्ति, अवनीका भवन्तीत्यर्थः । नारीणां चित्तं रजति तस्मिन् अनुरक्तं भवति ।२६१।

अविदुषां मूर्खाणां, सङ्गं संसर्गं, रहति परिहरति । अप्रियं रहयति अमङ्गलं निराकरोति । २६२ ।

मानं खण्डयति स्त्रीणां खण्डते द्विषतां शिरः।
प्रोषति द्विषतः सर्वान् प्रुष्णात्यपि च तत्पुरम्॥२९३॥
अर्थापयति शास्त्राणि नाऽर्थमर्थयतेऽन्यतः।
विभाजयति यो द्रव्यं सभाजयति सज्जनान्॥२९४॥
लुभत्यर्थे च कामे च धर्मे लुभ्यति यः सदा।
वेदान् गदति विस्पष्टं नचाऽन्यं गदति क्वचित्॥२९५॥
अश्नाति रुचिमाहारमश्नुते च परन्तपः।
दयते सर्वकार्येषु कुलं दययते द्विषाम्॥२९६॥
श्रियं यज्ञयते भक्त्या विभूत्या यज्ञ यजति।
यः खेटति सतां मध्ये स खोटति निरामयः॥२९७॥
गाधते ग्रासमत्यर्थं नाधते नाऽर्थमन्यतः।
योऽस्मै गुध्नाति तद्दुर्गं तत्क्षणादेव गुध्यति॥२९८॥

---

सर्वान् द्विषतः शत्रून्, प्रोषति दहति। तत्पुरं शत्रुनगरं प्रुष्णाति दहति॥२९३॥

अर्थमाचष्टे इति वाक्येन अर्थापयति। अर्थयते याचते। सभाजयति, पूजयति, सभाज पूजायामित्यस्य चदन्तस्य चुरादिपठितस्य प्रयोगः॥२९४॥

रुचिं निजकम्, आहारं भक्ष्यद्रव्यम्, अश्नाति भुङ्क्ते, 'सुपरीक्षितमन्नाद्य-मद्यान्मन्त्रैर्विषापहैः' इति मनुस्मरणात्। अश्नुते व्याप्नोति॥२९६॥

यज्ञयते पूजयति यजति यज्ञमाचरति, कुबेरतुल्यविभवोऽसौ राजे-तिभावः॥२९७॥

गाधते इच्छति। यो जनः, अस्मै राज्ञे, गुध्नाति कुप्यति, तत्क्षणात् अवि-लम्बितं, तद्दुर्गं गुध्यति वेष्टते॥२९८॥

एजते राजचिह्नैर्यः एजयत्यखिलं जगत् ।
इन्धे युद्धेषु यत्तेजः एधते यः श्रियाऽधिकम् ॥ २६९ ॥
यः ग्रोटति सभामध्ये तं ग्रेटति निरीक्ष्य यः ।
प्रतिषेधति यः यत्नान् कार्य्यं तस्याशु सिध्यति ॥२७०॥
नयन्ते यद्गुणाः सर्व्वं यस्तान्नयति दिङ्मुखम् ।
श्रिया मृडति मृड्नाति सरस्वत्या च यः सदा ॥ २७१ ॥

एजते शोभते। इन्धे दीप्यते। यः श्रिया लक्ष्म्या, अधिकम् एधते वर्द्धते ॥ २६९ ॥

ग्रोटति गर्व्वं प्रकाशयति। ग्रेटति अवजानाति। प्रतिषेधति निवारयति। सिध्यति सम्पद्यते ॥ २७० ॥

श्रिया लक्ष्म्या, मडति तुष्यति। सरस्वत्या विद्यया मृड्नाति आनन्दितो-भवति ॥ २७१ ॥

इतिसमासमवाप्तगुणोदयं कविरहस्यमिदं रसिकप्रियम् ।
सदभिधाननिधानहलायुधद्विजवरस्य कृतिः सुकृतार्थिनः॥

शुभमस्तु ॥

# साङ्केतिकवर्णविज्ञापनम्।

भ्वा, ... ... ... भ्वादिगणीयः।

अदा, ... .. ... अदादिगणीयः।

ह्वा, ... ... ... ह्वादिगणीयः।

दि, .. ... ... दिवादिगणीयः।

स्वा, ... ... ... स्वादिगणीयः।

तु, ... ... ... तुदादिगणीयः।

रु, ... ... ... रुधादिगणीयः।

तना, ... ... ... तनादिगणीयः।

क्रा, ... ... .. क्रादिगणीयः।

चु, ... ... .. चुरादिगणीयः।

दि-भ्रमा, ... ... दिवादिः भ्रमादिश्च।

तु-कु, ... ... ... तुदादिः कुटादिश्च।

तु-मु, ... ... ... तुदादिः मुचादिश्च।

क्रा-प्वा, ... ... क्रादिः प्वादिश्च।

घटा, ... ... ... घटादिः।

अदन्त चु, .. ... अकारान्तः चुरादिः।

प, ... ... ... परस्मैपदी।

आ, ... ... ... आत्मनेपदी।

उभ, ... ... ... उभयपदी।

अक, ... ... .. अकर्मकः।

सक, ... ... .. सकर्मकः।

द्विक, ... ... ... द्विकर्मकः।

अनिट्, ... ... यत्र इटः अभावः।

सेट् ... ... ... यत्र इटः भावः।

वेट्, ... ... ... यत्र इटः विकल्पः।

# कविरहस्यधृतधातुविवरणम्।

श्लोकसंख्या।

६। गुप् (भ्वा, प, सक, वेट्) रक्षणे; गोपायति (१)।

६। गुप् (भ्वा, आ, सक) निन्दायां; जुगुप्सते (२)।

६। गुप् (चु, प, सक) गोपने; गोपयति।

६। गुप् (दि, प, अक) व्याकुलीभावे; गुप्यति।

७। पृ (क्रया, प, सक) प्रीणने; पृणाति।

७। पृण् (तु, प, सक) प्रीणने; पृणति।

७। प्री (क्रया, प, सक) प्रीणने; प्रीणाति।

७। पृ (स्वा, प, सक) प्रीणने; पृणोति।

७। प्री (दि, आ, अक) प्रीतौ; प्रीयते।

७। प्री (भ्वा, उभ, सक) प्रीणने; प्रयते।

७। प्री (चु, प, सक) प्रीणने; प्राययति।

८। धू (स्वा, उभ, सक) कम्पने; धूनोति।

८। धु (स्वा, उभ, सक) कम्पने; धुनोति।

८। धू (क्रया-प्वा, उभ, सक) कम्पने; धुनाति।

८। धू (तु-कु, प, सक) कम्पने; धुवति।

---

(१) 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति सूत्रेण गुपधातोः स्वार्थे आयप्रत्यये कृते, गुणे, धातुसंज्ञायाञ्च गोपाय इति धातोस्तिप्।

(२) 'गुप्तिज्किद्भ्यः सन्' इत्यादिसूत्रेण सन्विधाने, इण्निषेधे, [illegible]-मीति गुणनिषेधे, द्वित्वे, जुगुप्स इति सनन्तस्य धातुसंज्ञायाञ्च तिप्।

श्लोकसंख्या ।

८ । धू (आन्त:, प, सक)(विपूर्व्वक:) कम्पने ; विधूनयति(१)।

८ । धू (भ्वा, उभ, सक) कम्पने ; धवति ।

९ । जॄ (दि, प, अक) जरायां ; जीर्य्यति ।

९ । जॄ (क्रया, प, अक,) जरायां, क्षये ; जॄणाति ।

९ । जूर् (दि, आ, अक) जरायां, क्षये ; जूर्य्यते ।

९ । ज्या (क्रया-प्वा, प, अक) जरायां, क्षये ; जिनाति ।

९ । जॄ (भ्वा, प, अक) जरायां, क्षये ; जरति ।

९ । जॄ (चु, प, सक) जरायां, क्षये ; जारयति ।

१० । तृप् (स्वा, प, सक) प्रीणने ; तृप्नोति ।

१० । तृप् (भ्वा, प, सक) प्रीणने , तर्पति ।

१० । तृप् (चु, प, सक) प्रीणने ; तर्पयति ।

१० । तृप् (दि, प, सक, वेट्) प्रीतौ ; तृप्यति ।

११ । प्री (क्रया-प्वा, प, सक) वरणे, प्रार्थने ; प्रीणाति, प्रिणाति ।

११ । वृ (क्रया, आ, सक) वरणे, प्रार्थने ; वृणीते ।

११ । वृ (स्वा, उभ, सक)(आङ्पूर्व्वक:) आवरणे ; आवृणोति ।

११ । वृ भ्वा, प, सक) वरणे, सेवायां ; वरति ।

११ । वृ (क्रया, प, सक) वरणे, प्रार्थने ; वृणाति ।

(१) 'मौधूनीयम् मा' इति मम् । मनीऽभावपद्ये मनोऽधी हस्ती धावयति इति पदम् ।

श्लोकसंख्या ।

११ । वर (अदन्त-चु, प, सक) वरणे, प्रार्थने ; वरयति ।

११ । व्री (दि, आ, सक,) वरणे, प्रार्थने ; व्रीयते ।

११ । वृ (चु, प, सक) वारणे ; वारयति ।

११ । वृ (भ्वा, आ, सक) (निपूर्व्वक) निवारणे ; निवरते ।

१२ । ग्रन्थ् (चु, प, सक) ग्रन्थने, रचने ; ग्रन्थयति ।

१२ । ग्रन्थ् (भ्वा, प, सक) ग्रन्थने, रचने ; ग्रन्थति ।

१२ । ग्रथ् (चु, प, सक) ग्रन्थने, रचने ; ग्राथयति ।

१२ । ग्रथ् (भ्वा, प, सक) ग्रन्थने, रचने; ग्रथति ।

१२ । ग्रन्थ् (क्र्या, प, सक) ग्रन्थने, रचने ; ग्रथ्नाति ।

१३ । स्फुट् (तु-कु, प, अक) विकाशे ; स्फुटति ।

१३ । स्फुट् (भ्वा, आ, अक) विकाशे ; स्फोटते ।

१३ । स्फुट् (भ्वा, प, अक) भेदे ; स्फोटति ।

१३ । स्फुट् (चु, प, सक) (आङ्पूर्व्वकः) भेदने ; आस्फोटयति ।

१४ । वस् (अदा, आ, सक) परिधाने ; वस्ते ।

१४ । वस् (चु, प, सक) (निपूर्व्वः) निवासे ; निवासयति ।

१४ । वस् (दि, प, अक) दर्पे ; वस्यति ।

१४ । वस् (चु, प, सक) (प्रपूर्व्वकः) निर्व्वासने ; प्रवासयति ।

१४ । वस् (चु, प, सक) सुरभीकरणे ; वासयति ।

१४ । वस् (भ्वा, प, अक) (निपूर्व्वकः) वासे, अवस्थाने ; निवसति ।

१५ । मृष (अदन्त चु, प, सक) क्षमायां ; मृषयति ।

श्लोकसंख्या।

१५। मृष् (दि, उभ, सक) क्षमायां ; मृष्यते।

१५। मृष् (भ्वा, आ, सक) क्षमायां ; मर्षते।

१५। मृष् (भ्वा, प, सक) क्षमायां ; मर्षति।

१५। मृष् (चु, प, सक) क्षमायां ; मर्षयति।

१६। छद् (चु, प, सक) आच्छादने ; छादयति।

१६। छद् (भ्वा, प, सक) आच्छादने ; छदति।

१६। छद (अदन्त चु, प, सक) आच्छादने ; छदयति।

१७। कु (तु, प, अक) अव्यक्तमधुरशब्दे ; कुवति।

१७। कुण् (तु, प, अक) अव्यक्तमधुरशब्दे ; कुणति।

१७। कू (क्रा, प, अक ) अव्यक्तमधुरशब्दे ; कुनाति।

१७। क्वण् (भ्वा, प, अक ) अव्यक्तमधुरशब्दे ; क्वणति

१८। ईर् (अदा, आ, अक) कम्पने, गतौ ; ईर्त्ते।

१८। ईर् (चु, प, सक) (प्रपूर्व्वकः) प्रेरणे ; प्रेरयति।

१८। ईर् (भ्वा, प, सक) (प्रपूर्व्वकः) प्रेरणे ; प्रेरति।

१८। इन् (तु, प, सक)(प्रपूर्व्वकः) प्रेरणे, प्रक्षेपे ; प्रेणति।

१८। इन् (चु, प, सक)(प्रपूर्व्वकः) प्रेरणे, प्रक्षेपे ; प्रेणयति।

१८। पेष् (चु, प, सक) प्रेषणे, गमने ; पेषयति।

१९। श्रा (अदा, प, सक, अनिट्) पाके, विक्लृत्तौ ; श्राति।

१९। श्री (क्रा, उभ, सक, अनिट् ) पाके ; श्रीणाति।

१९। श्रै (भ्वा, प, अक, अनिट् ) पाके, विक्लृत्तौ ; श्रायति।

१९। श्रा (घटा, प, सक) पाके ; श्रपयति।

श्लोकसंख्या।

२०। कु (यङन्तः, आ, सक) पुनः पुनरह्वाने; कोकूयते (१)।

२०। कु (अदा, प, अक) शब्दे ; कौति।

२०। कु (तु-कु, आ, अक) शब्दे ; कुवते।

२०। कु (भ्वा, आ, अक) शब्दे, उच्चारणे ; कवते।

२१। पुष् (क्र्या, प, सक) पोषणे, वर्द्धने ; पुष्णाति।

२१। पुष् (दि, प, सक) पोषणे, वर्द्धने ; पुष्यति।

२१। पुष् (भ्वा, प, सक) पोषणे, प्रोषणे ; पोषति।

२१। पुष् (चु, प, सक) पोषणे, पालने ; पोषयति।

२१। पूष् (भ्वा, प, अक) पुष्टौ, हृष्टौ ; पूषति।

२२। शास् (अदा, प, सक) शासने ; शास्ति।

२२। शास् (अदा, आ, सक) (आङ्पूर्व्वकः) प्रार्थने ; आशास्ते।

२२। शन्स् (भ्वा, आ, सक) (आङ्पूर्व्वकः) प्रार्थने ; आशंसते।

२२। शन्स् (भ्वा, आ, सक) प्रशंसायां, प्रार्थने ; शंसते।

२२। शस् (भ्वा, प, सक) (विपूर्व्वकः) वधे ; विशसति।

२३। अय् (भ्वा, आ, अक) (उत्पूर्व्वकः) उदये ; उदयते।

२३। इ (भ्वा, प, अक, अनिट्) (उत्पूर्व्वकः) उदये ; उदयति।

२३। इ (अदा, प, अक, अनिट्) (उत्पूर्व्वकः) अभ्युदये ; उदेति।

---

(१) कु(ङ) शब्दे, 'कौतु यां' इति सूत्रेण पुनः पुनः कवते इत्यर्थे चोकूयते, कोकूयते, इति पदद्वयम् भवति।

श्लोकसंख्या।

२३। डी (दि, आ, अक, अनिट्) (उत्पूर्व्वकः) समुड्डये ; उड्डीयते।

२४। दा (ह्वा, प, सक) दाने ; ददाति।

२४। दा (अदा, प, सक) छेदने, खण्डने ; दाति।

२४। दै (भ्वा, प, सक) (अवपूर्व्वः) शोधने ; अवदायति।

२४। दो (दि,प,सक)(अवपूर्व्वः) छेदने, खण्डने; अवद्यति।

२५। विद् (अदा, प, सक) ज्ञाने ; वेत्ति।

२५। विद् (दि, आ, सक) अवस्थाने ; विद्यते।

२५। विद् (रु, आ, सक, अनिट्) मीमांसायां ; विन्ते।

२५। विद् (तु-मु, उभ, सक, अनिट्) लाभे ; विन्दति।

२६। सू (अदा, आ,सक, वेट्) (प्रपूर्व्वः) प्रसवे ; प्रसूते।

२६। सू (दि, आ, सक, वेट्)(प्रपूर्व्वः) प्रसवे ; प्रसूयते।

२६। सु (अदा, प, सक) (प्रपूर्व्वः) प्रसवे; प्रसौति।

२६। सु (भ्वा, प, सक) (प्रपूर्व्वः) प्रसवे ; प्रसवति।

२७। वृज् (रु, प, सक) वर्ज्जने ; वृणक्ति।

२७। वृज् (अदा, आ, सक) वर्ज्जने ; वृक्ते।

२७। वृज् (भ्वा, प, सक) वर्ज्जने ; वर्ज्जति।

२७। वृज् (चु, प, सक) वर्ज्जने ; वर्ज्जयति।

२८। पृच् (अदा, आ, अक) (सम्पूर्व्वः) सम्पर्के; सम्पृक्ते।

२८। पृच् (रु, प, अक) (सम्पूर्व्वः) सम्पर्के ; सम्पृणक्ति।

श्लोकसंख्या ।

२८ । पृच् (चु, प, अक) (सम्पूर्व्वः) सम्पर्के ; सम्पर्चयति ।

२८ । पृच् (भ्वा, प, अक) (सम्पूर्व्वकः) सम्पर्के ; सम्पर्चति ।

२९ । तप् (भ्वा, प, अक, अनिट्) प्रभुत्वे, उत्तापे ; तपति ।

२९ । तप् (दि, आ, अक, अनिट्) प्रभुत्वे, उत्तापे ; तप्यते ।

२९ । तप् (भ्वा, उभ, सक) सन्तापने, दाहे ; तपति ।

२९ । तप् (चु, प, सक) सन्तापने, दाहे ; तापयति ।

३० । शुन्ध् (भ्वा, प, सक) शोधने ; शुन्धति ।

३० । शुन्ध् (भ्वा, आ, सक) शोधने ; शुन्धते ।

३० । शुन्ध् (चु, प, सक) शोधने ; शुन्धयति ।

३० । शुध् (दि, प, अक, अनिट्) शुद्धौ ; शुध्यति ।

३१ । सह् (चु, प, सक) सहने ; साहयति ।

३१ । सह् (भ्वा, प, सक) सहने ; सहति ।

३१ । सह् (भ्वा, आ, सक) सहने ; सहते ।

३१ । सह् (दि, प, सक) सहने ; सह्यति ।

३२ । मान् (भ्वा, आ, सक) विचारे ; मीमांसते (१) ।

३२ । मान् (चु, प, सक) सम्माने ; मानयति ।

३२ । मान् (भ्वा, प, सक) सम्माने ; मानति ।

३२ । मन् (चु, आ, सक) सम्माने ; मानयते ।

---

(१) 'कित्तिजगुपः सन् मानबधदानशानभ्यश्च दीर्घश्च' इति सन्विधाने, चिकित्से, जुगुप्से, मीमांस इति मानस्य धातुसंज्ञायां तिप् ।

श्लोकसंख्या ।

२१ । गृह् (भ्वा, आ, सक) ग्रहणे ; गृहते ।

२१ । ग्रह् (क्र्या, उभ, सक) ग्रहणे ; गृह्णाति ।

२१ । ग्लह् (भ्वा, आ, सक) ग्रहणे ; गर्हते ।

२१ । ग्लह (अदन्त चु, आ, सक) ग्रहणे ; ग्लहयते ।

२४ । मह् (भ्वा, प, सक) पूजायां ; महति ।

२४ । मह (अदन्त चु, प, सक) पूजायां ; महयति ।

२४ । मही(ङ)(नामधातुः,आ,अक) पूजायां;महीयते(१)।

२४ । मन्ह् (भ्वा, आ, अक) वृद्धौ ; मंहते ।

२५ । धृ (भ्वा, उभ,सक) धारणे ; धरते ।

२५ । धृ (चु, प, सक) धारणे ; धारयति ।

२५ । धृ (तु, आ, अक) अवस्थाने ; ध्रियते (२)।

२५ । धृ (तु, प, अक) अवस्थाने ; ध्रियति ।

२६ । इष् (तु, प, सक, सेट्) अभिलाषे ; इच्छति (३) ।

२६ । इष् (दि, प, सक, सेट्) (अनुपूर्व्वकः) अन्वेषणे ;
अन्विष्यति ।

(१) 'नमस्तपोवरिवः कण्ड्वादिभ्यः यः क्तौ' इति सूत्रेण यप्रत्ययः। कण्ड्वादिगणमध्ये हिणीमहीङ्लीयोप्रभृतीनां ङानुबन्धेन आत्मनेपदम् ।

(२) धृ(ङ) अवस्थाने इति धातोस्तौदादिकात् कर्त्तरि लट् ;—यथा 'ध्रियते कुसुमप्रसाधनं' इति कुमारः, ध्रियते अवतिष्ठते इत्यर्थः ।

(३) आदानपेक्षादिसूत्रेण तौदादिकस्य इषधातोरिच्छादेशः ।

श्लोकसंख्या।

३६। इष् (क्र्या, प, सक, वेट्) आभीक्ष्ण्ये; इष्णाति।

३६। ईष् (भ्वा, आ, सक, सेट्) दाने, ईक्षणे; ईषते।

३७। पृ (तु, आ, अक) (वि+आङ्पूर्व्वः) व्यापारे, उद्योगे; व्याप्रियते।

३७। पृ (ह्वा, प, सक) पालने, रक्षणे; पिपर्त्ति।

३७। पृ (चु, प, सक) पूरणे; पारयति।

३७। पाल् (चु, प, सक) पालने, रक्षणे; पालयति।

३८। त्रुट् (तु-कु, प, अक) भेदे, क्षये; त्रुटति।

३८। त्रुट् (दि, प, अक) भेदे, क्षये; त्रुट्यति।

३८। तुड् (तु-कु, प, सक) भेदे, विनाशे; तुडति।

३८। तुड् (भ्वा, आ, सक) भेदे, विनाशे; तोडते (१)।

३९। मि (स्वा, उभ, सक) क्षेपणे; मिनोति।

३९। मी (क्र्या, उभ, सक) विनाशे; मीनाति।

३९। मी (दि, आ, सक) विनाशे; मीयते।

३९। मी (भ्वा, आ, सक) गतौ, प्राप्तौ; मयते।

४०। तय् (भ्वा, आ, अक) पालने, रक्षणे; तयते।

४०। ताय् (भ्वा, आ, सक) पालने, रक्षणे; तायते।

४०। त्रै (भ्वा, आ, सक) रक्षणे, त्राणे; त्रायते।

४०। स्त्यै (भ्वा, प, अक) संहतौ, ध्वनौ; स्त्यायति।

(१) गोविन्दभट्टप्रभृतीनां मते धातुरयं परस्मैपदी।

श्लोकसंख्या।

४१। शुभ् (भ्वा, आ, अक) दीप्तौ ; शोभते।

४१। शुन्भ् (तु, प, अक) दीप्तौ ; शुभति।

४१। शुभ् (तु-मु, प, अक) दीप्तौ ; शुम्भति।

४१। शुभ् (तु-मु, प, सक) निपूर्व्वकः, विनाशे ; निशुम्भति।

४२। युज् (रु, उभ, सक) (निपूर्व्वकः) योजने ; नियुङ्क्ते।

४२। युज् (चु, प, सक) (निपूर्व्वकः) नियोजने ; नियोजयति।

४२। युज् (भ्वा, प, सक) (निपूर्व्वकः) नियोजने ; नियोजति।

४२। युज् (दि, आ, अक) योगे, समाधौ ; युज्यते।

४३। स्तोम (अदन्त चु, प, सक) प्रशंसायां ; स्तोमयति।

४३। स्तु (अदा, उभ, सक) स्तवे ; स्तौति।

४३। नु (अदा, प, सक) स्तवे ; नौति।

४३। नू (तु-कु, प, सक) स्तवे ; नुवति।

४४। कॄ (तु, प, सक) क्षेपणे ; किरति।

४४। कृ (तना, उभ, सक) करणे ; करोति।

४४। कृ (स्वा, उभ, सक) वधे ; कृणोति।

४४। कॄ (क्र्या-प्वा उभ, सक) वधे ; कृणाति।

४५। ऋ (ह्वा, प, सक) गमने ; इयर्त्ति।

४५। ॠ (क्र्या-प्वा, सक) गमने ; ऋणाति।

४५। ऋण् (तना, प, सक) गतौ, व्याप्तौ ; ऋणोति।

४५। ऋ (भ्वा, प, सक) गतौ, व्याप्तौ ; ऋच्छति।

श्लोकसंख्या।

४६। लुन्ठ् (भ्वा, प, सक) गमने ; लुण्ठति।

४६। लुठ् (भ्वा, आ, अक) आलस्ये ; लोठते।

४६। लुन्ठ् (भ्वा, प, सक) अपहरणे ; लुण्ठति।

४६। लुन्ठ् (चु, प, सक) भूमौ लुण्ठने ; लुण्ठयति।

४७। तिल् (यङन्तः) (भ्वा, आ, अक) गतौ ; तेतिल्यते।

४७। तिल्ल् (भ्वा, प, सक) गमने ; तिल्लति।

४७। चुल्ल् (भ्वा, प, अक) विलासे ; चुल्लति।

४८। मुच् (तु-मु, उभ, सक, अनिट्) मोचने ; मुञ्चति।

४८। मुच् (चु,उभ,सक)(प्रपूर्व्वकः) प्रमोचने; प्रमोचयति।

४८। मोच् (चु, प, सक) मोचने, क्षेपणे ; मोचयति।

४९। पत् (भ्वा, प, अक)(निपूर्व्वकः) पतने ; निपतति।

४९। पत (अदन्त चु, प, अक) पतने ; पतयति।

४९। पत् (दि, आ, अक)(अधिपूर्व्वः) प्रभुत्वे, आधिपत्ये ;

अधिपत्यते।

५०। भू (भ्वा, उभ, सक) प्राप्तौ ; भवते (१)।

५०। भू (चु, आ, सक) सम्भावने, तर्पणे ; भावयते।

५०। भू (भ्वा, प, अक) सत्तायां ; भवति।

५०। भू (चु, प, सक) भावने, मनने ; भावयति।

५१। गूर् (चु, आ, सक)(उत्पूर्व्वः) उद्यमे ; उद्गूरयते।

(१) 'भुवः प्राप्तौ वा णं' इति सूत्रेण प्राप्त्यर्थे अस्य आत्मनेपदम्।

श्लोकसंख्या।

५१। गुर् (तु-कु, आ, सक)(उत्पूर्व्वः) उद्यमे; उद्गुरते।

५१। गूर् (दि, आ, सक)(आङ्पूर्व्वः) आगमने; आगूर्य्यते।

५२। विद् (चु, आ, सक) वेदने, बोधने; वेदयते।

५२। विद् (चु, प, सक) वेदने, बोधने; वेदयति।

५२। विद् (चु, प, सक)(निपूर्व्वकः) निवेदने; निवेदयति।

५३। बुध् (भ्वा, आ, सक) ज्ञाने; बोधते।

५३। बुध् (भ्वा, प, सक) ज्ञाने; बोधति।

५३। बुध् (दि, आ, सक, अनिट्) ज्ञाने; बुध्यते।

५४। बध् (भ्वा, आ, सक) निन्दायां; बीभत्सते (१)।

५४। बन्ध् (क्र्या, प, सक, अनिट्) बन्धने; बध्नाति।

५४। बध् (चु, प, सक) बन्धने; बाधयति।

५५। मृज् (अदा, प, सक, वेट्) शोधने; मार्ष्टि।

५५। मृज् (भ्वा, प, सक, वेट्) मार्जने, भूषणे; मार्जति।

५५। मृज् (चु, प, सक) भूषणे, निवारणे; मार्जयति।

५६। क्षुभ् (दि, प, अक) क्षोभे, सञ्चलने; क्षुभ्यति।

५६। क्षुभ् (भ्वा, आ, अक) क्षोभे, सञ्चलने; क्षोभते।

५६। क्षुभ् (क्र्या, प, अक) क्षोभे, उद्वेगे; क्षुभ्नाति।

५७। हिन्स् (रु, प, सक) हिंसायां; हिनस्ति।

---

(१) कित्तिजगुपः सन्नेव इत्यादिसूत्रेण स्वार्थे सन् क्लीब। मानबधा-दिवधानिमादिसूत्रेण बधधावीर्घश्च भः।

श्लोकसंख्या ।

५७ । हिन्स् (भ्वा, प, सक) हिंसायां ; हिंसति ।

५७ । हिन्स् (चु, प, सक) हिंसायां ; हिंसयति ।

५८ । ह्री (ह्वा, प, अक) लज्जायां ; जिह्रेति ।

५८ । ह्रीछ् (भ्वा, प, अक) लज्जायां ; ह्रीच्छति ।

५८ । ह्रीणी(ङ) (नामधातुः) लज्जायां ; ह्रीणीयते (१) ।

५९ । सुख (अदन्त चु, प, सक,) प्रीणने ; सुखयति ।

५९ । सुख (नामधातुः) सुखानुभवे ; सुखायते (२) ।

५९ । सुस् (दि, प, अक) प्रीतौ ; सुस्यति ।

६० । देव् (भ्वा, आ, अक) क्रीड़ायां ; देवते ।

६० । दिव् (दि, प, अक) क्रीड़ायां ; दिव्यति ।

६० । दिव् (चु, आ, अक) (परिपूर्व्वः) रोदने ; परिदेवयते ।

६१ । श्लिष् (दि, प, सक, अनिट्) आलिङ्गने ; श्लिष्यति ।

६१ । श्लिष् (भ्वा, प, सक) दहने ; श्लेषते ।

६१ । श्लिष् (चु, प, सक) आलिङ्गने, वाक्ये ; श्लेषयति ।

६२ । मन्थ् (क्र्या, प, सक) मथने, दहने ; मथ्नाति ।

(१) ह्रीणीङ् (ङ) अयंच कण्ड्वादिगणे पाठात् 'धातुप्रकृतिभ्यः कण्ड्वादिभ्यः यक् स्वार्थे' इति सूत्रेण स्वार्थे यक्, आत्मनेपदं च ।

(२) 'सुखादिभ्यः कर्तृवेदनायां क्यङ्' इतिसूत्रेण क्यङ् । सुखमनुभवतीत्यर्थे सुखायते ।

श्लोकसंख्या ।

६२ । मन्थ् (भ्वा, प, सक) मथने, दलने ; मन्थति ।

६२ । मथ् (भ्वा, प, सक) मथने, पीड़ने , मथति ।

६३ । शङ्क् (भ्वा, आ, अक) शङ्कायां, भये ; शङ्कते ।

६३ । शक् (दि, उभ, सक) करणसामर्थ्ये ; शक्यते ।

६३ । शक् (स्वा, प, सक, वेट्) करणसामर्थ्ये ; शक्नोति ।

६३ । शक् (स्वा, आ, सक, सेट्) करणसामर्थ्ये ; शक्नुते ।

६४ । खेल् (भ्वा, प, अक) क्रीड़ायां, उत्सवे ; खेलति ।

६४ । खेल् (चु, आ, अक) क्रीड़ायां, उत्सवे ; खेलयते ।

६४ । खेला (नामधातुः) क्रीड़ाकरणे ; खेलायते (१) ।

६५ । पा (भ्वा, प, सक) पाने ; पिबति ।

६५ । पै (भ्वा, प, सक) शोषणे ; पायति ।

६५ । पी (दि, आ, सक) पाने ; पीयते ।

६६ । आप् (चु, प, सक) (प्रपूर्व्वकः) प्राप्तौ ; प्रापयति ।

६६ । आप् (भ्वा, प, सक) (प्रपूर्व्वकः) प्राप्तौ ; प्रापति ।

६६ । आप् (स्वा,प,सक) (प्रपूर्व्वकः) प्राप्तौ ; प्राप्नोति ।

६७ । लङ्घ् (भ्वा, आ, सक) अतिक्रमे ; लङ्घते ।

---

(१) खेलाशब्दस्य कण्ड्वादिमध्ये पाठात् यक् । कण्ड्वादिश ; कण्डू(ञ्), लिपी(ङ्), मही(ङ्), हृणी(ङ्), वल्गु, मन्तु, वल्गु, लोट, तिरस्, इरस्, उषस्, कुषुभ, मगध, मेधा, सुख, दुःख, चरण, अरर, दुवस, वपर, चरम, भिषज्, वर्हिष, एला, केला, खेला, उरस, पयस, प्रभृतिः ।

श्लोकसंख्या ।

६७। खनृह् (चु, प, सक) उत्सहने ; खहयति ।

६७। खनृह् (भ्वा, प, सक) मोषणे ; खहति ।

६८। खिद् (दि, आ, अक, अनिट्) खेदे, दुःखे ; खिद्यते ।

६८। खिद् (तु-मु, प, अक, अनिट्) खेदे, व्याघाते ;
खिन्दति ।

६९। ज्ञा (चु, प, सक)(आङ्पूर्व्वः) आदेशे ; आज्ञापयति ।

६९। ज्ञा (चु, प, सक)(सम्पूर्व्वः) वधे ; संज्ञापयति ।

६९। ज्ञा (चु,प,सक)(विपूर्व्वः) आवेदने ; विज्ञापयति ।

७०। कल् (भ्वा, आ, अक)(निस्पूर्व्वः) शब्दे, निःसरणे ;
निष्कलते ।

७०। कल (अदन्त चु, प, सक) गणने, लाभे ; कलयति ।

७०। कल् (चु, प, सक)(उत्पूर्व्वः) विस्तारे, उदीरणे ;
उत्कालयति ।

७१। गर्व्व् (भ्वा, प, अक) गर्व्वे, अहङ्कारे ; गर्व्वति ।

७१। गल्भ (नामधातुः) गर्व्विताचारे ; गल्भायते (१) ।

७१। गर्व्व् (चु, आ, अक) गर्व्वे, अहङ्कारे ; गर्व्वयते ।

७२। क्रन्द् (भ्वा, आ, अक) आर्त्तनादे, विलापे ; क्रन्दते ।

७२। क्रन्द् (भ्वा, प, अक) रोदने, विलापे ; क्रन्दति ।

(१) 'आचक्षाणो क्यङ्वा गल्भक्लीबहोडात्तु ङ' इति सूत्रेण गल्भ इत्याचरतीत्यर्थे ङः ङित्, ङानुबन्धेन आत्मनेपदम् । गल्भः अहङ्कारीत्यर्थः ।

शोकसंज्ञा।

७२। क्रन्द् (चु, प, अक) रोदने, विलापे ; क्रन्दयति।

७३। दृ (तु, आ, सक)(आङ्पूर्व्वः) आदरे ; आद्रियते।

७३। दॄ (क्र्या, प, सक) विदारणे ; दृणाति।

७३। दॄ (भ्वा, प, अक) भये ; दरति।

७४। तृण् (तना, प, सक) परिभवे ; तृणोति।

७४। तॄ (क्र्या, प सक) आच्छादने ; तृणाति।

७४। स्तॄ (स्वा, उभ, सक) आच्छादने ; स्तृणोति।

७५। यत् (भ्वा, आ, अक) यत्ने ; यतते।

७५। यत् (चु, प, सक) पीड़ने ; यातयति।

७५। यत् (चु, प, सक)(निस्पूर्व्वः) वैरशोधने ; निर्यातयति।

७६। मान् (भ्वा, उभ, सक) तीक्ष्णीकरणे ; मीमांसते (१)।

७६। शि (स्वा, उभ, सक)(निपूर्व्वकः) तीक्ष्णीकरणे ; निशिनोति।

७६। मान् (चु, प, सक) तीक्ष्णीकरणे ; मानयति।

७७। सद् (तु, प, अक, अनिट्) विषादे ; सीदति (२)।

७७। सद् (भ्वा, प, सक) (आङ्पूर्व्वः) प्राप्तौ ; आसदति।

७७। सद् (चु, प, सक)(आङ्पूर्व्वकः) प्राप्तौ ; आसादयति।

७८। वण्ट् (भ्वा, प, सक) विभागे, वण्टने ; वण्टति।

---

(१) कितिजगुपः सन्निमादिसूत्रेण मानधातोः सन् दीर्घश्च।

(२) घ्राद्यादिसूत्रेण सदधातोः सीदादेशः।

श्लोकसंख्या।

७८। वण्ट् (चु, प, सक) वण्टने, विभागे ; वण्टयति।

७८। वण्ट (अदन्त चु,प,सक) वण्टने, विभागे ; वण्टापयति।

७९। मा (ह्वा, आ, सक) प्रमाणे ; मिमीते।

७९। मा (दि, आ, सक) प्रमाणे ; मायते।

७९। म्ना (भ्वा प, सक) अभ्यासने ; मनति (१)।

८०। वृध् (भ्वा, आ, अक) वृद्धौ ; वर्द्धते।

८०। वर्द्ध् (चु, प, सक) वर्द्धने, पूरणे , वर्द्धयति।

८०। वर्ध् (चु, प, सक) छेदने ; वर्धयति।

८१। स्कन्भ् (भ्वा, आ, सक) (विपूर्व्वः) निवारणे, रोधे ; विष्कम्भते।

८१। स्कन्भ् (क्र्या, प, सक) (विपूर्व्वः) विस्तारे ; विष्कभ्नाति।

८१। स्कन्भ् (स्वा, प, सक) (विपूर्व्वः) निवारणे रोधे ; विष्कभ्नोति।

८२। स्तन्भ् (भ्वा, आ, अक) गर्व्वे, मदे ; स्तम्भते।

८२। स्तन्भ् (क्र्या, प, अक) गर्व्वे, मदे ; स्तभ्नाति।

८२। स्तन्भ् (स्वा, प, अक) गर्व्वे, मदे ; स्तभ्नोति।

८३। क्लृप् (भ्वा, आ, अक) सामर्थ्ये ; कल्पते।

८३। क्लृप् (चु, प, सक) कल्पनायां, उद्भावने ; कल्पयति।

८३। क्लृप् (भ्वा, प, सक) छेदने ; कल्पति।

(१) म्नादाणित्यादिना म्नाधातोर्मनादेशः।

श्लोकसंख्या ।

८४ । दाय् (भ्वा, आ सक) दयायां, दाने ; दायते ।

८४ । दे (भ्वा, आ, सक) दाने ; दयते ।

८४ । दी (दि, आ, अक) क्षये ; दीयते ।

८५ । क्षीव् (भ्वा, आ, अक) उन्मादे, मोहे ; क्षीवते ।

८५ । तीव् (भ्वा, प, अक) स्थौल्ये, उन्मादे ; तीवति ।

८६ । रुष् (चु, प, अक) क्रोधे ; रोषयति ।

८६ । रुष् (दि, प, अक) क्रोधे ; रुष्यति ।

८६ । रुष्(भ्वा,प,अक)(अभिपूर्व्वः) वधे, संहारे ; अभिरोषति ।

८७ । धृष् (स्वा, प, अक) प्रागल्भ्ये ; धृष्णोति ।

८७ । धृष् (भ्वा, प, सक) पीड़ने वधे ; धर्षति ।

८७ । धृष् (चु, उभ, सक) बलपूर्व्वकाक्रमणे ; धर्षयति ।

८८ । चूर् (दि, आ, सक) दाहे, विनाशे ; चूर्य्यते ।

८८ । चूर्ण् (चु, प, सक) पेषणे, विनाशे ; चूर्णयति ।

८८ । चूर्ण (नामधातुः) (अवपूर्व्वः) चूर्णद्रव्यैरवकिरणे ; अवचूर्णयति ।

८९ । कण्ठ् (भ्वा, आ, अक) (उत्पूर्व्वः) उत्कण्ठायां ; उत्कण्ठते ।

८९ । कण्ठ् (भ्वा, प, सक) (उत्पूर्व्वः) उत्कण्ठापूर्व्वक-चिन्तायां ; उत्कण्ठति ।

८९ । कण्ठ्(चु,प,अक)(उत्पूर्व्वः) उत्कण्ठायां, औत्सुक्ये ; उत्कण्ठयति ।

श्लोकसंख्या।

८०। मार्ग् (चु, प, सक) अन्वेषणे; मार्गयति।

८०। मार्ग् (भ्वा, प, सक) अन्वेषणे; मार्गति।

८०। मृग (अदन्त चु, आ, सक) अन्वेषणे; मृगयते।

८१। शिष् (रु, प, सक)(विपूर्व्वः) विशेषणे; विशिनष्टि।

८१। शिष् (भ्वा, प, सक)(विपूर्व्वः) विशेषणे; विशेषति।

८१। शिष् (चु, प, सक)(विपूर्व्वः) विशेषणे; विशेषयति।

८२। तन् (चु, प, सक)(विपूर्व्वः) विस्तारे; वितानयति।

८२। तन् (भ्वा, प, सक)(विपूर्व्वः) विस्तारे; वितनति।

८२। तन् (तना, उभ, सक)(विपूर्व्वः) विस्तारे; वितनोति।

८३। क्लेश् (भ्वा, आ, अक) कथने; क्लेशते।

८३। क्लिश् (दि, उभ, अक) क्लेशे; क्लिश्यते।

८३। क्लिश् (क्र्या, प, सक, वेट्) पीड़ने; क्लिश्नाति।

८४। वच् (अदा, प, द्विक, अनिट्) कथने; वक्ति।

८४। वच् (भ्वा, प, द्विक, अनिट्) कथने; वचति।

८४। वच् (चु, प, सक) वाचने, पाठे; वाचयति।

८५। बृह् (भ्वा, प, अक) वृद्धौ, दीप्तौ; बर्हति।

८५। बृन्ह् (भ्वा, प, अक) वृद्धौ, दीप्तौ; बृंहति।

८५। बृन्ह् (भ्वा, प, अक) गजशब्दे; बृंहति।

८६। क्षिप् (तु-कु, प, सक) प्रेरणे, वेगगमने; क्षिपति।

८६। क्षिप् (दि, प, सक) प्रेरणे, वेगगमने; क्षिप्यति।

श्लोकसंख्या ।

८६ । क्षिप् (चु, प, सक) प्रेरणे, वेगगमने ; क्षेपयति ।

८७ । भृज् (भ्वा, आ, सक) भर्जने, दाहे ; भर्जते ।

८७ । भ्रस्ज् (तु, उभ, सक, अनिट्) भर्जने, दाहे ; भृज्जति ।

८७ । भृ (क्र्या-प्वा, प, सक) भर्जने, दाहे ; भृणाति ।

८८ । रिच् (रु, उभ, अक, अनिट्) विट्‌चरणे, वियोगे ; रिङ्क्ते ।

८८ । रिच् (भ्वा, प, अक) वियोगे, शून्यत्वे ; रेचति ।

८८ । रिच् (चु, प, अक) संयोगे, सम्पृक्तौ ; रेचयति ।

८९ । वद् (भ्वा, प, सक) कथने ; वदति ।

८९ । वद् (भ्वा, आ, सक) कथने ; वदते ।

८९ । वद् (चु, प, सक) कथने ; वादयति ।

१०० । अर्ज् (चु, प, सक) उपार्जने ; अर्जयति ।

१०० । अर्ज् (भ्वा, आ, सक) उपार्जने ; अर्जते ।

१०० । अर्ज् (भ्वा, प, सक) उपार्जने ; अर्जति ।

१०१ । शाल् (भ्वा, आ, सक) प्रशंसायां ; शालते ।

१०१ । शल् (भ्वा, आ, अक) गतौ, प्रचारे ; शलते ।

१०१ । शल् (भ्वा, प, सक) गतौ, प्राप्तौ ; शलति ।

१०२ । भक्ष् (चु, प, सक, सेट्) भक्षणे ; भक्षयति ।

१०२ । भक्ष् (भ्वा, आ, सक) भक्षणे ; भक्षते ।

१०२ । भक्ष् (भ्वा, प, सक) भक्षणे ; भक्षति ।

१०३ । लल् (चु, आ, सक) लिप्सायां ; लालयते ।

श्लोकसंख्या।

१०३। लल् (चु, प, सक) लालने, पालने ; लालयति।

१०३। लल् (भ्वा, प, अक)(उत्पूर्व्वकः) विलासे, चाञ्चल्ये ;
उल्ललति।

१०४। मुट् (तु-कु, प, सक) चूर्णने, मर्द्दने ; मुटति।

१०४। मुट् (भ्वा, प, सक) चूर्णने, मर्द्दने ; मोटति।

१०४। मुट् (चु, प, सक) चूर्णने, मर्द्दने ; मोटयति।

१०५। मृ (क्र्या-प्वा, प, सक) वधे ; मृणाति।

१०५। मृण् (तु, प, सक) वधे ; मृणति।

१०५। मृ (तु, आ, अक) मरणे ; म्रियते।

१०६। त्रस् (दि, प, अक) भये ; त्रस्यति।

१०६। त्रस् (भ्वा, प, अक) भये ; त्रसति।

१०६। त्रस् (चु,प,सक) धारणे, ग्रहणे, निषेधे ; त्रासयति।

१०७। लुट् (दि, प, सक) लुण्ठने ; लुट्यति।

१०७। लुट् (भ्वा, प, सक) लुण्ठने ; लोटति।

१०७। लुट् (चु, प, सक) लुण्ठने, मन्थने ; लोटयति।

१०८। गर्ह् (भ्वा, आ,सक) निन्दायां ; गर्हते।

१०८। गर्ह् (भ्वा, प, सक) निन्दायां ; गर्हति।

१०८। गर्ह् (चु, प, सक) निन्दायां ; गर्हयति।

१०९। द्राघ् (भ्वा, आ, अक) आयामे, दैर्घ्ये ; द्राघते।

१०९। द्राड़् (भ्वा, आ, अक) प्रजागरे ; द्राड़ते।

श्लोकसंख्या ।

१०८ । द्राघ् (भ्वा, प, अक) आयामे, हृद्धौ ; द्राघते ।

११० । क्षि (क्र्या, प, सक) क्षये, नाशे ; क्षिणाति ।

११० । क्षिण् (तना, प, सक) क्षये, नाशे ; क्षिणोति ।

११० । क्षिण् (तना, आ, सक) क्षये, नाशे ; क्षिणुते ।

१११ । ह्रिणु (भ्व, आ, सक) गमने, अनादरे ; ह्रिणुते ।

१११ । ह्रिण् (भ्वा, प, अक) विलासे, हावे ; ह्रिणति ।

१११ । हेड् (भ्वा, आ, सक) अनादरे ; हेड़ते ।

११२ । क्षि (भ्वा, प, अक) क्षये, नाशे ; क्षयति ।

११२ । क्षै (भ्वा, प, अक) क्षये, नाशे ; क्षायति ।

११२ । क्षि (तु, प, अक) वासे, गतौ ; क्षियति ।

११३ । जुड् (चु, प, सक) प्रेरणे, गतौ ; जोड़यति ।

११३ । जुड् (भ्वा, प, सक) प्रेरणे, गतौ ; जोड़ति ।

११३ । जुड् (तु कु, प, सक) बन्धने ; जुड़ति ।

११४ । राध् (स्वा, प, सक) पाके, संसिद्धौ ; राध्नोति ।

११४ । राध् (दि, प, सक) पाके, संसिद्धौ ; राध्यति ।

११४ । राध् (दि, प, अक) सम्पत्तौ ; राध्यति ।

११५ । मुष् (भ्वा, प, सक) हरणे ; मोषति ।

११५ । मुष् (क्र्या, प, सक) हरणे, खण्डने ; मुष्णाति ।

११५ । मुष् (दि, प, सक) हरणे, खण्डने ; मुष्यति ।

११६ । अर्घ् (चु, प, सक) पूजायां ; अर्घयति ।

श्लोकसंख्या।

११६। अर्च् (भ्वा, प, सक) पूजायां ; अर्चति।

११६। अर्च् (भ्वा, आ, सक) पूजायां ; अर्चते।

११७। व्यय् (चु, प, सक) व्यये, उत्सर्गे ; व्यययति।

११७। व्यय् (भ्वा, प, सक) गतौ, प्राप्तौ ; व्ययति।

११७। व्यय् (भ्वा, आ, सक) गतौ, व्याप्तौ ; व्ययते।

११८। अर्द् (भ्वा, प, सक) विनाशे ; अर्दति।

११८। अर्द् (भ्वा, आ, सक) विनाशे ; अर्दते।

११८। अर्द् ( चु, प, सक) विनाशे ; अर्दयति।

११९। स्वद् (भ्वा, आ, सक) आस्वादने ; स्वदते।

११९। स्वाद् (भ्वा, आ, सक) आस्वादने ; स्वादते।

११९। स्वद् (चु, प, सक) (आङ्पूर्व्वः) आस्वादने ;
आस्वादयति।

१२०। विच्छ् (तु, प, सक) गमने ; विच्छति।

१२०। विच्छ् (भ्वा, प, सक) गमने ; विच्छायति (१)।

१२०। विच्छ् (आन्त:, प, सक) हरणे ; विच्छाययति।

१२१। भी (ह्वा, प, अक) भये ; बिभेति।

१२१। भेष् (भ्वा, प, अक) भये ; भेषति।

१२१। भेष् (भ्वा, आ, अक) भये ; भेषते।

(१) 'विच्छाऽस्तुतिपर्य्यायः' इत्यायः, ततो धातुसंज्ञा। आयविकल्पपक्षे तुदादित्वात् विच्छति इति रूपम्।

श्लोकसंख्या ।

१२२ । कृत् (रु, प, सक) वेष्टने ; कृणत्ति ।

१२२ । कृत् (तु-मु, प, सक) छेदने ; कृन्तति ।

१२२ । कॄत् (चु, प, सक) कीर्त्तने ; कीर्त्तयति ।

१२३ । अन्च् (भ्वा, आ, अक)(निपूर्व्वः) अपगमे ; न्यञ्चते ।

१२३ । अन्च् (भ्वा, प, अक)(निपूर्व्वः) अपगमे ; न्यञ्चति ।

१२३ । अन्च् (चु, प, सक) व्यञ्जने, शोभने ; अञ्चयति ।

१२४ । कुन्थ् (क्र्या, प, अक) संक्लेशे ; कुथ्नाति ।

१२४ । कुन्थ् (भ्वा, प, अक) संक्लेशे ; कुन्थति ।

१२४ । कुथ् (दि, प, अक) संक्लेशे, दुर्गन्धे ; कुथ्यति ।

१२५ । चर् (चु, प, सक)(विपूर्व्वः) विचारे, मीमांसायां ; विचारयति ।

१२६ । चित् (भ्वा, प, सक) संज्ञाने ; चेतति ।

१२६ । चित् ( चु, आ, सक) संज्ञाने ; चेतयते ।

१२७ । भृ (भ्वा, उभ, सक,) भरणे, धारणे ; भरते ।

१२७ । भृ (ह्वा, उभ, सक) भरणे, धारणे ; बिभर्त्ति ।

१२८ । धाव् (भ्वा, आ, अक) द्रुतगतौ ; धावते ।

१२८ । धाव्(भ्वा,प,अक)(अभिपूर्व्वः)द्रुतगतौ;अभिधावति।

१२९ । स्तुभ् (भ्वा, आ, अक) स्तम्भे ; स्तोभते ।

१२९ । स्तुन्भ् (क्र्या, प, अक) स्तम्भे ; स्तुभ्नाति ।

१२९ । स्तुन्भ् (स्वा, प, अक) स्तम्भे ; स्तुभ्नोति ।

श्लोकसंख्या ।

१३० । निन्ज् (अदा, आ, अक) (प्र+आङ्पूर्व्वकः) शुद्धौ ; प्राणिङ्क्ते ।

१३० । निज् (ह्वा, उभ, सक, अनिट्) शोधने, प्रक्षालने ; नेनेक्ति ।

१३१ । क्लिन्द् (भ्वा, उभ, अक, सेट्) रोदने ; क्लिन्दति ।

१३१ । क्लिद् (दि,प,अक,वेट्) क्लेदे, आर्द्रतायां ; क्लिद्यति ।

१३२ । धे (भ्वा, प, अक)(सम्पूर्व्वः) सन्धौ ; सन्धयति ।

१३२ । धा (ह्वा,उभ,सक) (सम्पूर्व्वः) सन्धाने, सन्दधाति ।

१३३ । भन्ज् (चु, प, सक) भञ्जने ; भञ्जयति ।

१३३ । भन्ज् (रु, प, सक, अनिट्) भञ्जने ; भनक्ति ।

१३४ । विच् (ह्वा, उभ, सक, अनिट्)(विपूर्व्वकः) विवेके ; वेवेक्ति ।

१३४ । विच् (रु, उभ, सक, अनिट्)(विपूर्व्वकः) विवेके ; विविनक्ति ।

१३५ । प्याय् (भ्वा,आ,अक)(आङ्पूर्व्वकः) प्रीतौ ; आप्यायते ।

१३६ । यम् (भ्वा, आ, अक) (वि+आङ्पूर्व्वः) व्यायामे ; व्यायच्छते (१) ।

(१) 'आङो यमहनः' इति सूत्रेण अकर्मकात् आङ्पूर्व्वात् यमात् कर्त्तरि वाच्ये आत्मनेपदम् ।

श्लोकसंख्या।

१३६। मिद् (भ्वा, आ, अक) मेदे, स्नेहे ; मेदते।

१३६। मिद् (दि, प, अक) मेदे, स्नेहे ; मेद्यति।

१३७। क्ष (स्वा, प, सक) हिंसायां ; क्षणोति।

१३७। क्री, (क्र्या, प, सक) द्रव्यविनिमये ; क्रीणाति।

१३८। अर्च् (भ्वा, आ, अक) दीप्तौ ; अर्चते।

१३८। अर्घ (नामधातुः, आ, अक) पूजार्हत्वे ; अर्घायते।

१३९। धोर् (भ्वा, प, अक) गतिचातुर्य्ये ; धोरति।

१३९। धूर् (दि, आ, अक) गतौ ; धूर्य्यते।

१४०। कुच् (भ्वा, प, अक)(सम्पूर्व्वः) संकोचे ; संकोचति।

१४०। कुच् (तु-कु, प, अक)(सम्पूर्व्वः) संकोचे, संकुचति।

१४१। घुष् (भ्वा, प, सक) घोषणे ; घोषति।

१४१। घुष् (चु, प, सक) घोषणे ; घोषयति।

१४२। डी (दि, आ, अक)(उत्पूर्व्वः) आकाशगतौ ; उड्डीयते।

१४२। डी (भ्वा, आ, अक)(उत्पूर्व्वः) आकाशगतौ ; उड्डयते।

१४३। मी (भ्वा, उभ, सक)(अनुपूर्व्वः) अनुमाने ; अनुमयते।

१४३। मी (चु, प, सक)(अनुपूर्व्वः) अनुमाने ; अनुमाययति।

१४४। मृद् (क्र्या, प, सक) मर्द्दने, चूर्णने ; मृद्नाति।

१४४। मृद् (भ्वा, आ, सक) मर्द्दने, संवाहने ; मर्द्दते।

१४५। मिल् (तु, उभ, अक) सम्मिलने ; मिलति।

१४५। मील् (भ्वा, प, अक) मुद्रायां, निमीलने ; मीलति।

श्लोकसंख्या।

१४६। घुट् (भ्वा, आ, अक) (विपूर्व्वः, आङ्पूर्व्वः) प्रति-
निहत्तौ ; व्याघोटते।

१४६। घुट् (तु-कु, प, अक)(विपूर्व्वः, आङ्पूर्व्वः) व्याघाते,
निहत्तौ ; व्याघुटति।

१४७। पञ्च् (भ्वा, आ, सक)(प्रपूर्व्वः) प्रकाशे ; प्रपञ्चते।

१४७। पञ्च् (चु, प, सक)(प्रपूर्व्वः) विस्तारे ; प्रपञ्चयति।

१४८। तुष् (दि, प, अक) सन्तोषे ; तुष्यति।

१४८। तूष् (भ्वा, प, अक) सन्तोषे ; तूषति।

१४९। विज् (तु, आ, अक)(उत्पूर्व्वः) उद्वेगे ; उद्विजते।

१४९। विज् (रु, प, अक)(उत्पूर्व्वः) वैराग्ये ; उद्विनक्ति।

१५०। निद् (भ्वा, उभ, सक) निन्दायां ; नेदते।

१५०। निन्द् (भ्वा, प, सक) निन्दायां ; निन्दति।

१५१। पूर् (चु, प, सक) पूरणे ; पूरयति।

१५१। पूर् (दि, आ, सक) परिपूरणे ; पूर्य्यते।

१५२। गल्भ (नामधातुः)(प्रपूर्व्वः) गर्व्विताचारे ; प्रगल्भायते।

१५२। गल्भ् (भ्वा, आ, अक)(प्रपूर्व्वः) गर्व्वे ; प्रगल्भते।

१५३। काश् (भ्वा, आ, अक)(प्रपूर्व्वः) दीप्तौ ; प्रकाशते।

१५३। काश् (दि, आ, अक)(प्रपूर्व्वः) दीप्तौ ; प्रकाश्यते।

१५४। तृप् (दि, प, अक) प्रीतौ ; तृप्यति।

१५४। तृप् (चु, प, सक) प्रीणने ; तर्पयति।

श्लोकसंख्या।

१५५। खिट् (भ्वा, प, सक) वधे ; खेटति।

१५५। खेट् (अदन्त चु, आ, सक) वधे ; खेटयति।

१५६। मन् (तना, आ, सक) ज्ञाने ; मनुते।

१५६। मन् (दि, आ, सक) ज्ञाने ; मन्यते।

१५७। चित्र (अदन्त चु, प, सक) अनुरञ्जने ; चित्रयति।

१५७। चित्री(ङ) (कण्ड्वादिः) विस्मये ; चित्रीयते।

१५८। कुप् (दि, प, अक) कोपे , कुप्यति।

१५८। कुप् (चु, प, अक)(प्रपूर्व्वः) प्रकोपे ; प्रकोपयति,।

१५९। ईड् (अदा, आ, सक) स्तुतौ ; ईट्टे।

१५९। ईड् (चु, प, सक) स्तुतौ ; ईडयति।

१६०। अन्क् (भ्वा, आ, सक) लक्षणे, अङ्कने ; अङ्कते।

१६०। अन्क् (अदन्त चु,प,सक) चिह्नयुक्तकरणे ; अङ्कयति।

१६१। शिष् (चु, प, सक)(निस्पूर्व्वः) उन्मूलने, शून्यता-
सम्पादने ; निःशेषयति।

१६२। मुच् (तु-मु, उभ, सक, अनिट्) मोचने ; मुञ्चति।

१६२। उक्ष् (तु, प, सक)(प्रपूर्व्वः) मोचने ; प्रोक्षति।

१६३। भ्राम् (दि,आ,अक)(उत्पूर्व्वः) दीप्तौ ; उद्भ्राम्यते।

१६३। भ्रम् (दि, प, अक) भ्रंशे, अधःपतने ; भ्रम्यति।

१६४। आन्च् (भ्वा,प,अक) ओरक्तौ, आकाङ्क्षायां ; आञ्चति।

१६४। कान्च् (भ्वा, प, सक) आकाङ्क्षायां ; काञ्चति।

श्लोकसंख्या ।

१६५ । घट् (भ्वा, आ, सक)(उत्पूर्व्वः) उच्छेदे ; उद्घटते ।

१६५ । घट् (चु, प, सक) (उत्पूर्व्वः) सङ्घाटने, विस्तारे ; उद्घाटयति ।

१६६ । तेप् (भ्वा, आ, अक) क्षरणे, कम्पने ; तेपते ।

१६७ । क्षम् (भ्वा, आ, सक, वेट्) क्षमायां ; क्षमते ।

१६७ । क्षम् (भ्वा, प, सक) क्षमायां ; क्षमति ।

१६७ । क्षम् (दि-शमा, प, सक) क्षमायां ; क्षाम्यति ।

१६८ । तिज् (भ्वा, आ, सक) क्षमायां ; तितिक्षते (१) ।

१६८ । तिज् (चु, प, सक) निशाने ; तेजयति ।

१६९ । श्लथ (नामधातुः, आ, अक) शैथिल्ये ; श्लथायते (२) ।

१६९ । श्लथ् (भ्वा, आ, अक) शैथिल्ये ; श्लथते ।

१७० । श्रण् (चु, प, सक)(विपूर्व्वकः) दाने ; विश्राणयति ।

१७० । श्रण् (भ्वा, प, सक)(विपूर्व्वकः) दाने ; विश्रणति ।

१७१ । मन्द् (भ्वा, आ, अक) जाड्ये ; मन्दते ।

१७१ । मन्द (नामधातुः, आ, अक) जडाचारे ; मन्दायते ।

१७२ । अन् (अदा, प, अक)(प्रपूर्व्वः) प्राणधारणे ; प्राणिति ।

---

(१) तिजगुपः क्षमायामिति सनि कृते, द्वित्वे, तितिक्ष इति धातश्च धातुसंज्ञायां तिप् ।

(२) लोहितादेराकृतिगणत्वात् श्लथशब्दात् क्यः क्यष् भवति, आत्मने-पदञ्च ।

श्लोकसंख्या ।

१७२ । अन्(दि,आ,अक)(प्रपूर्व्वः)प्राणधारणे ; प्राण्यते(१) ।

१७३ । लुप् (तु-मु, प, सक) लोपे, छेदने ; लुम्पति ।

१७३ । लुप् (दि, प, अक) मोहे, औत्सुक्ये ; लुप्यति ।

१७४ । दध् (भ्वा, आ, सक) दाने , दधते ।

१७४ । धा (ह्वा, उभ, सक) धारणे ; धत्ते ।

१७५ । दद् (भ्वा, आ, सक) दाने ; ददते ।

१७५ । दा (ह्वा, उभ, सक) दाने ; दत्ते ।

१७६ । भ्रन्श् (भ्वा, आ, अक) भ्रंशे, नाशे ; भ्रंशते ।

१७६ । भ्रन्श् (दि, प, अक) भ्रंशे, नाशे ; भ्रश्यति ।

१७७ । शप् (भ्वा,उभ,सक,अनिट्)आक्रोशे,शपथे ; शपते ।

१७७ । शप्(दि,उभ,सक,अनिट्)आक्रोशे,शपथे ; शप्यति ।

१७८ । नट् (भ्वा, प, अक) नृत्ये, अभिनये ; नटति ।

१७८ । नट् (चु, प, सक) दीप्तौ, अभिनये ; नाटयति ।

१७९ । वन्च् (चु, आ, सक) प्रतारणे ; वञ्चयते ।

१७९ । वन्च् (भ्वा, प, सक) गतौ ; वञ्चति ।

१८० । पू (भ्वा, आ, सक) शोधने ; पवते ।

१८० । पू (क्रचा-प्वा, उभ, सक) शोधने ; पुनाति ।

१८१ । मा (ह्वा,आ,सक) परिमाणे, विचारे ; मिमीते ।

(१) वाक्यनिर्दिष्टनिर्देशादिना विकल्पविधानात् पक्षे प्राणिति, प्राण्यते, इति रूपान्तराण्यपि भवति ।

श्लोकसंख्या ।

१८१ । मीम् (भ्वा, प, अक) शब्दे ; मीमति ।

१८२ । कृष् (तु, उभ, सक, अनिट्) कर्षणे ; कृषति ।

१८२ । कृष् (भ्वा, प, सक, अनिट्) कर्षणे ; कर्षति ।

१८३ । शीक् (भ्वा, आ, अक) सेके ; शीकते ।

१८३ । शीक् (चु, प, सक) सेके, अर्षे ; शीकयति ।

१८४ । शब्द(नामधातुः,आ,अक)शब्दकरणे ; शब्दायते(१) ।

१८४ । शब्द् (चु, प, अक) शब्दे ; शब्दयति ।

१८५ । लस् (भ्वा, प, अक) (विपूर्व्वकः)विलासे, क्रीडायां ; विलसति ।

१८५ । लस् (चु,प,अक) नृत्यनैपुण्ये, अभिनये ; लासयति ।

१८६ । ली (चु,प,अक)(विपूर्व्वः)अन्तर्धाने ; विलाययति ।

१८६ । ली (भ्वा,प,अक)(विपूर्व्वः) द्रवीकरणे : विलयति ।

१८७ । क्रम् (भ्वा,आ, अक) (प्रपूर्व्वः) आरम्भे, चेष्टायां ; प्रक्रमते (२) ।

१८७ । क्रम्(दि,प,सक)(आङ्पूर्व्वः)आक्रमणे ; आक्रम्यति ।

१८८ । वी ( अदा, प, सक) गर्भे धारणे ; वेति ।

१८८ । जन् (दि,आ,अक)(विपूर्व्वः) उत्पत्तौ; विजायते ।

---

(१) शब्दं करोतीति शब्दायते । 'शब्दवैरकलहादिः कविवेदपापे वा:' इति क्यः । ङानुबन्धेनात्मनेपदम् ।

(२) 'प्रोपादारम्भे' प्रोपाभ्यां परात् क्रमो र्न क्रमात् वे आरम्भे, इत्यात्मनेपदम् । प्रक्रमते आरभते इत्यर्थः ।

श्लोकसंख्या ।

१८९ । प्रथ् (भ्वा, आ, अक) प्रख्यातौ ; प्रथते ।

१८९ । प्रथ् (चु, प, अक) प्रख्यातौ ; प्रथयति ।

१९० । अम् (भ्वा, प, सक) गतौ, प्राप्तौ ; अमति ।

१९० । अम् (चु, प, सक) पीड़ने, रोगे ; आमयति ।

१९१ । विष (ह्वा, उभ, सक, अनिट्) व्यापने ; वेवेष्टि ।

१९१ । विष् (क्र्या, प, सक) वियोजने ; विष्णाति ।

१९२ । श्रिष् (भ्वा, प, सक) विनाशे ; श्रेषति ।

१९२ । श्रेष(नामधातुः,प,अक)श्रेषतुल्याचारे ; श्रेषति(१) ।

१९३ । क्षिप् (तु, उभ, सक, अनिट्) क्षेपणे ; क्षिपति ।

१९३ । क्षिप् (दि, प, सक, अनिट्) क्षेपणे ; क्षिप्यति ।

१९४ । लप् (भ्वा, प, सक) व्यक्तायां वाचि ; लपति ।

१९४ । लप् (चु, प, सक) व्यक्तायां वाचि ; लापयति ।

१९५ । यु (अदा, प, अक) सङ्गमे, मिश्रणे ; यौति ।

१९५ । यु (क्र्या, उभ, सक) सङ्गमे, मिश्रणे ; युनाति ।

१९६ । रुज् (चु प, सक) हिंसायां , रोजयति ।

१९६ । रुज् (तु, प, सक) भङ्गे, पीड़ने ; रुजति ।

१९७ । म्लेछ् (भ्वा, प, अक) अपशब्दे ; म्लेच्छति ।

(१) श्रेषति इत्यत्र धातूत्कान्तौ सर्वोपधेभ्यादिना क्विः, ततः गुणः, इकार-उच्चारणार्थः, ततः वकारमात्रावशेषस्य लोपः, तदन्तत्वेन श्रेष इति धातुसंज्ञा, तिप् शप्, अकारलोपः ।

श्लोकसंख्या ।

१८७ । म्लेच्छ् (चु, प, अक) म्लेच्छभाषाप्रयोगे ; म्लेच्छयति ।

१८८ । दृश् (भ्वा, आ, अक, अनिट्) (सम्पूर्व्वः) ज्ञाने, दर्शने ; सम्पश्यते (१) ।

१८८ । दृश् (भ्वा, प, सक अनिट्) दर्शने ; सम्पश्यति ।

१८९ । निन्स् (अदा, आ, सक) चुम्बने ; निंस्ते ।

१८९ । निच् (भ्वा, प, सक) चुम्बने , निचति ।

२०० । घट् (भ्वा, आ, अक) (विपूर्व्वः) अपसरणे ; विघटते ।

२०० । घट् (चु, प, अक) (विपूर्व्वकः) पलायने ; विघाटयति ।

२०१ । स्तन् (भ्वा, प, अक) (निपूर्व्वः) शब्दे ; निस्तनति ।

२०१ । स्तन (अदन्तचु, प, अक) मेघशब्दे ; स्तनयति ।

२०२ । रस् (भ्वा, प, अक) शब्दे ; रसति ।

२०२ । रस (अदन्त चु, प, सक) आस्वादने ; रसयति ।

२०३ । लस्ज् (भ्वा, आ, अक) लज्जायां ; लज्जते (२) ।

२०४ । तुल् (चु, प, सक) उन्तोलने ; तोलयति ।

२०४ । तूल् (चु, प, सक) परिमाणे ; तूलयति ।

२०५ । दन्श् (चु, आ, सक) दंशने ; दंशयते ।

२०५ । दन्श् (भ्वा, प, सक) अनिट्) दंशने ; दशति ।

---

(१) सम्पूर्व्वत्वादकर्मकत्वाच्च सम्पश्यते इत्यात्मनेपदम् । 'समोगमृच्छिप्रच्छि-श्रुवित्त्यर्त्तिदृशः', सम: परेभ्य: अकर्मकेभ्य एभ्य: तं (आत्मनेपदं) स्यात् ते । एते सकर्मका अपि विवक्षावशादकर्मका: ।

(२) कौमुदीमते लस्जधातुमुदाहरणीय: ।

श्लोकसंख्या।

२०६। घुष् (चु, प, सक) घोषे; घोषयति।
२०६। घुष् (भ्वा, प, सक) घोषे; घोषति।
२०७। पद (अदन्त चु, आ, सक) गतौ, प्राप्तौ; पदयते।
२०७। पद्, (दि, आ, अक)(सम्पूर्वः) सिद्धौ; सम्पद्यते।
२०८। लम्भ् (प्रेरणे आन्तः, भ्वा, आ, सक) शब्दे; लम्भयति।
२०८। लभ् (भ्वा, आ, सक, अनिट्) लाभे; लभते।
२०९। हृष् (भ्वा, प, अक)(प्रपूर्वः) प्रहर्षे; प्रहर्षति।
२०९। हृष् (दि, प, अक)(प्रपूर्वः) प्रहर्षे; प्रहृष्यति।
२१०। दोला (नामधातुः) दोलासदृशाचारे; दोलायते।
२१०। दुल् (चु, प, सक) दोलने; दोलयति।
२११। वाह् (भ्वा, आ, अक) प्रयत्ने; वाहते।
२११। वह् (भ्वा, उभ, सक, अनिट्) वहने; वहते।
२१२। खिद् (भ्वा, आ, अक) खेदे; खेदते।
२१२। खिद् (दि, प, अक, अनिट्) खेदे; खिद्यति।
२१३। वय् (भ्वा, आ, सक)(विपूर्वः) तन्तुसन्ताने, व्ययते।
२१३। वे (भ्वा, उभ, सक) तन्तुसन्ताने; वयते।
२१४। वा (अदा, प, अक) वायुचलने, वाति।
२१४। वै (भ्वा, प, अक)(उत्पूर्वः) शोषे; उद्वायति।
२१५। अर्ज् (चु, प, अक) बलप्राणयोः; अर्जयति (१)।

(१) चुरादेर्णिचः कदाचिदनित्यत्वात् ऊर्जतीति पदस्य सूत्रे प्रयुक्तम्।

श्लोकसंख्या।

२१६। यम् (भ्वा, प, सक, अनिट्) (आङ्पूर्वः) विस्तारे ; आयच्छति।

२१६। आञ्छ् (भ्वा, प, अक) विस्तृतौ ; आञ्छति।

२१७। मुद् (चु, उभ, सक) अधिवासने ; मोदयते।

२१७। मुद् (भ्वा, आ, अक) प्रहर्षे ; मोदते।

२१८। शुच् (दि, प, अक) शौचे ; शुच्यति।

२१८। शुचि(नामधातुः, भृशादिः)शौचाचारे;शुचीयते(१)।

२१९। स्ना (अदा, प, अक) स्नाने ; स्नाति।

२१९। स्नै (भ्वा, प, सक) वेष्टने ; स्नायति।

२२०। गर्ज् (भ्वा, प, अक) गर्जने ; गर्जति।

२२०। गर्ज् (चु, प, अक) गर्जने ; गर्जयति।

२२१। वाय् (भ्वा, आ, अक) वाये, भ्रंशे ; वायते।

२२१। वाय् (भ्वा, प, अक) वाये, भ्रंशे ; वायति।

२२२। स्वृ (भ्वा, प, अक, वेट्) शब्दे ; स्वरति।

२२२। स्वर (अदन्त चु, प, सक) तिरस्कारे ; स्वरयति।

२२३। सम् (भ्वा, प, अक) वैक्लव्ये ; समति।

२२३। साम (अदन्त चु, प, सक) सान्त्वने ; सामयति।

२२४। ईक्ष् (भ्वा, आ, सक)(प्रपूर्वः) दर्शने ; प्रेक्षते।

---

(१) शुचिशब्दस्य भृशादित्वादभूततद्भावार्थे क्यङ्। अशुचिः शुचिर्भवतीत्यर्थः। 'भृशादिपूर्वे वा तद्धीयत' इति सूत्रम्।

श्लोकसंख्या ।

२२४ । ईच् (चु, प, सक,) (प्रपूर्व्वः) दर्शने ; प्रेचयति ।

२२५ । लष,(दि, उभ, सक) (अभिपूर्व्वः) अभिलाषे; अभिलष्यति।

२२५ । लष् (भ्वा, उभ, सक) (अभिपूर्व्वः) अभिलाषे ; अभिलषते ।

२२६ । क्लम् (दि-शमा, प, अक) ग्लानौ ; क्लाम्यति ।

२२६ । क्लम् (भ्वा, प, अक) ग्लानौ ; क्लामति ।

२२७ । कत्थ् (भ्वा, आ, सक) श्लाघायां ; कत्थते ।

२२७ । कथ (अदन्त चु, प, सक) कथने ; कथयति ।

२२८ । अञ्ज् (रु, प, सक, वेट्) (विपूर्व्वः) प्रकाशे ; व्यनक्ति ।

२२८ । अञ्ज् (चु, प, सक) (विपूर्व्वः) प्रकाशे ; व्यञ्जयति ।

२२९ । वुट् (भ्वा, प, सक,) (आङ्पूर्व्वः) छेदे ; आवोटति ।

२२९ । वुट् (चु, प, सक) (आङ्पूर्व्वः) छेदे ; आवोटयति ।

२३० । पश् (चु, प, सक) (समपूर्व्वः) बन्धने ; सम्पाशयति ।

२३० । पश् (च, प, सक) (विपूर्व्वः) बन्धनान्मोचने ; विपाशयति ।

२३१ । घूर्ण् (तु, उभ, सक) भ्रमणे ; घूर्णते ।

२३१ । घुण् (तु-कु, प, सक) भ्रमणे ; घुणति ।

२३२ । कस् (भ्वा, प, अक) (विपूर्व्वः) दीप्तौ ; विकसति ।

२३२ । काश् (भ्वा, आ, अक) (विपूर्व्वः) दीप्तौ ; विकाशते ।

२३३ । किल् (तु, प, अक) क्रीड़ायां ; किलति ।

२३३ । क्रीड् (भ्वा, प, अक) क्रीड़ायां ; क्रीड़ति ।

२३४ । कूट् (अदन्त चु, प, सक) दाहे, वधे ; कूटयति ।

२३४ । कुट् (तु-कु, प, अक) (समपूर्व्वः) कौटिल्ये ; संकुटति ।

श्लोकसंख्या।

२३५। क्षप् (भ्वा, आ, अक) क्षपायां; क्षपते।

२३५। क्षप (अदन्त चु, प, अक) दौर्बल्ये; क्षपयति।

२३६। श्वित् (भ्वा, आ, अक) श्वैत्ये; श्वेतते।

२३६। श्विन्द् (भ्वा, आ, अक) श्वैत्ये; श्विन्दते।

२३७। पन्थ् (चु, प, सक) गतौ; पन्थयति।

२३७। पथ् (चु, प, सक) गतौ; पथयति।

२३८। ह्राद् (भ्वा, आ, अक) शब्दे; ह्रादते।

२३८। ह्लाद् (भ्वा, आ, अक) आह्लादे; ह्लादते।

२३९। मूर्च्छ् (भ्वा, प, अक) मोहे; मूर्च्छति।

२३९। स्फूर्च्छ् (भ्वा, प, सक) विस्मृतौ; स्फूर्च्छति।

२४०। दु (स्वा, प, सक) उपतापे; दुनोति।

२४०। दुष् (तु, प, सक) गतौ; दुषति।

२४१। लिङ्ग्(भ्वा,प,सक)(आङ्पूर्व्वः)आश्लेषे; आलिङ्गति।

२४१। लिङ्ग्(चु,प,सक)(आङ्पूर्व्वः)रञ्जने; आलिङ्गयति।

२४२। सु (भ्वा, उभ, सक) गतौ, प्रेरणे; सवति।

२४२। सु (स्वा,उभ,सक) निष्पीड़ने, अभिषवे; सुनोति।

२४३। मद् (चु, आ, सक, वेट्) तर्पणे; मादयते।

२४३। मद् (दि-शमा, प, अक) मदे; माद्यति।

२४४। स्निह् (दि, प, अक, वेट्) प्रीतौ; स्निह्यति।

२४४। स्निह् (चु, प, अक) प्रीतौ; स्नेहयति।

श्लोकसंख्या।

२४४। शूर (अदन्त चु, आ, अक) विक्रमे; शूरयते।

२४४। शूर् (दि, आ, सक) विनाशे; शूर्य्यते।

२४५। शील् (भ्वा, प, सक) अनुशीलने; शीलति।

२४५। शील (अदन्त चु,प,सक) अनुशीलने; शीलयति।

२४५। स्तम् (भ्वा, प, अक) वैक्लव्ये; स्तमति।

२४५। तम् (दि-शमा, प, अक) वैक्लव्ये; ताम्यति।

२४६। छिद् (रु, उभ, सक, अनिट्) छेदने; छिनत्ति।

२४६। छेद (अदन्त चु, प, सक) छेदने; छेदयति।

२४६। ऋध् (स्वा, प, अक) वृद्धौ; ऋध्नोति।

२४६। ऋध् (दि, प, अक) वृद्धौ; ऋध्यति।

२४७। श्लिष् (भ्वा, प, सक) आलिङ्गने; श्लेषति।

२४७। गवेष (अदन्त चु, प, सक) अन्वेषणे; गवेषयति।

२४७। इ (अदा, आ, सक)(अधिपूर्व्वः) अध्ययने; अधीते।

२४७। इ (अदा, प, सक)(अधिपूर्व्वः) स्मरणे, अध्येति।

२४८। लोच्(भ्वा,आ,सक)(आङ्पूर्व्वः)आलोचने; आलोचते।

२४८। लोच्(चु,प,सक)(आङ्पूर्व्वः) अनुशीलने; आलोचयति

२४८। लोक्(भ्वा,आ,सक)(आङ्पूर्व्वः) दर्शने; आलोकते।

२४८। लोक् (चु,प,सक)(आङ्पूर्व्वः) दर्शने; आलोकयति।

२४९। कुत्स् (चु, उभ, सक) निन्दायां; कुत्सयते।

२४९। कुत्स् (भ्वा, प, सक) निन्दायां; कुत्सति।

२४९। भर्त्स् (चु, प, सक) भर्त्सने; भर्त्सयति।

श्लोकसंख्या ।

२४९ । भर्त्स् (चु, आ, सक) भर्त्सने ; भर्त्सयते ।

२५० । मण्ड् (चु, प, सक) भूषणे ; मण्डयति ।

२५० । मण्ड् (भ्वा, प, सक) भूषणे ; मण्डति ।

२५० । भूष् (चु, प, सक) भूषणे ; भूषयति ।

२५० । भूष् (भ्वा, प, सक) भूषणे ; भूषति ।

२५१ । मूल् (चु, प, सक)(उत्पूर्व्वः) उन्मूलने ; उन्मूलयति ।

२५१ । मूल् (भ्वा, उभ, सक)(उत्पूर्व्वः) उन्मूलने ; उन्मूलति ।

२५१ । पीड् (भ्वा, प, सक) पीडने ; पीडति ।

२५१ । पीड् (चु, प, सक) पीडने ; पीडयति ।

२५२ । वर्ह् (चु, प, सक)(निपूर्व्वः) वधे ; निवर्हयति ।

२५२ । वर्ह् (भ्वा, आ, अक)(निपूर्व्वः) दीप्तौ ; निवर्हते ।

२५२ । अर्ह् (भ्वा, प, सक) भजने, पूजने ; अर्हति ।

२५३ । नम् (भ्वा, प, सक, अनिट्) नमस्कारे ; नमति ।

२५३ । नमस् (नामधातुः) नमस्कारे ; नमस्यति (१) ।

२५३ । रुध् (रु, उभ, सक) अनिट्, आवरणे ; रुणद्धि ।

२५३ । रुध् (दि, आ, सक, अनिट्)(अनुपूर्व्वः) अनुरोधे ; अनुरुध्यते ।

२५४ । निद्रा(भ्वादिः, आ, अक) निद्राभजने ; निद्रायते ।(२)

---

(१) नमोवरिवश्चित्रङः क्यच् । नमस्करोति इत्यर्थे नमस्यति ।

(२) निद्रादिशब्दो धर्मवचनोऽपि शब्दशक्तिस्वभावात् धर्मिवचनएव, तेन अनिद्रावान् निद्रावान् भवतीत्यर्थे निद्रायते । 'भृशादिभ्यो वा तत्रैव' इति सूत्रेण निद्राशब्दस्य भृशादिगणे पाठात् क्यङ्, ङानुबन्धेन आत्मनेपदञ्च ।

श्लोकसंख्या।

२५४। द्रा (अदा, प, अक) (निपूर्व्वः) निद्रायां ; निद्राति।

२५४। गृध् (दि, प, सक) लिप्सायां ; गृध्यति।

२५४। गर्द्ध् (चु, उभ, सक) लिप्सायां ; गर्द्धयते।

२५५। तूर् (दि, आ, अक) त्वरायां ; तूर्य्यते।

२५५। त्वर् (भ्वा, आ, अक) त्वरायां ; त्वरते।

२५५। ध्वन् (भ्वा, प, सक) घोषणे ; ध्वनति।

२५५। ध्वन (अदन्त चु, प, सक) घोषणे ; ध्वनयति।

२५६। तर्ज् (भ्वा, आ, सक) भर्त्सने ; तर्जते।

२५६। तर्ज् (चु, प, सक) भर्त्सने ; तर्जयति।

२५६। दु (स्वा, प, सक) उपतापे ; दुनोति।

२५६। दू (दि, आ, अक) उपतापे ; दूयते।

२५७। सूद् (भ्वा, आ, अक) भ्रंशे ; सूदते।

२५७। सूद् (चु, प, सक) हिंसायां ; सूदयति।

२५७। कित् (सनन्तः, भ्वा, प, सक) रुग्जये ; चिकित्सति (१)।

२५८। गॄ (तु, आ, सक) (सम्पूर्व्वकः) प्रतिज्ञायां ; सङ्गिरते (२)।

२५८। गॄ (क्रया-प्वा, प, सक) कथने ; गृणाति।

---

(१) कित्तिजगुपः सन्निम् इत्यादिना सन्विधाने, इण्निषेधे, गुणाभिमीति गुणनिषेधे, सन् यङन्तौ धिरिति द्वित्वे, सन्यतादिर्धुरिति चिकित्सभावस्य धातुसंज्ञायाञ्च तिप्। सन् विधाने कृते कितधातोः सन्देहार्थत्वेऽपि 'सन्नन्तेऽपि स्थितो मतः' इत्यनेनास्य रोगापनयनार्थत्वम्।

(२) 'समः प्रतिज्ञायाम्' इति सूत्रेण सम्पूर्व्वात् गिरतेः प्रतिज्ञार्थे आत्मनेपदम्।

श्लोकसंख्या ।

२५८ । भुज् (रु,आ,सक,अनिट्) भोजने, भोगे ; भुङ्क्ते ।

२५८ । भुज् (तु, प, सक) कौटिल्ये ; भुजति ।

२५९ । पल् (भ्वा, प, सक) गमने ; पलति ।

२५९ । अय् (भ्वा,आ,अक)(परापूर्व्वः) पलायने ; पलायते ।

२५९ । हा (ह्वा, प, सक) त्यागे ; जहाति ।

२५९ । हा (ह्वा, आ, सक) प्राप्तौ, गतौ ; जिहीते ।

२६० । ली (क्र्या-प्वा, प, अक) श्लेषे ; लिनाति ।

२६० । ली (दि, आ, अक) श्लेषे ; लीयते ।

२६० । जन् (दि, आ, अक) जनौ ; जायते ।

२६० । जि (भ्वा, प, अक) जये ; जयति ।

२६१ । पा (अदा, प, सक) रक्षणे ; पाति ।

२६१ । पै (भ्वा, प, अक) शोषे ; पायति ।

२६१ । रन्ज् (भ्वा, उभ, अक, अनिट्) रागे ; रजति ।

२६१ । रन्ज् (दि,उभ,अक,अनिट्)(अनुपूर्व्वकः) अनुरागे ;
अनुरज्यते ।

२६२ । रह् (भ्वा, प, सक) त्यागे ; रहति ।

२६२ । रह (अदन्त चु, प, सक) त्यागे ; रहयति ।

२६२ । भ्रम् (दि-शमा, प, अक) भ्रमणे ; भ्राम्यति ।

२६२ । भ्रम् (भ्वा, प, अक) भ्रमणे ; भ्रमति ।

२६३ । खन्ड् (चु, प, सक) भञ्जने ; खण्डयति ।

२६३ । खन्ड् (भ्वा, आ, सक) छेदने ; खण्डते ।

श्लोकसंख्या।

२६३। प्रुष् (भ्वा प, सक) दाहे ; प्रोषति।

२६३। प्रुष् (दि, प, सक) दाहे ; प्रुष्यति।

२६४। अर्थ (नामधातुः)अर्थजिज्ञासायां ; अर्थापयति(१)।

२६४। अर्थं (अदन्त चु, आ, सक) प्रार्थने ; अर्थयते।

२६४। भाज (अदन्त चु, प, सक) (विपूर्व्वः) विभागे ; विभाजयति।

२६४। सभाज (अदन्त चु,प,सक) सम्माने ; सभाजयति।

२६५। लुभ् (तु, प, अक) लोभे ; लुभति।

२६५। लुभ् (दि, प, अक) लोभे ; लुभ्यति।

२६५। गद् (भ्वा, प, सक) भाषणे ; गदति।

२६५। गद् (दि, प, सक) भर्त्सने ; गद्यति।

२६६। अश् (क्र्या, प, सक) भोजने ; अश्नाति।

२६६। अश् (स्वा, आ, सक)व्याप्तौ ; अश्नुते।

२६६। दक्ष् (भ्वा, आ, अक) नैपुण्ये ; दक्षते।

२६६। दक्ष् (चु, आ, सक) हिंसायां ; दक्षयते।

२६७। यक्ष् (चु, आ, सक)पूजायां ; यक्षयते।

२६७। यक्ष (नामधातुः) यक्षसदृशाचारे ; यक्षति (२)।

---

(१) अर्थमाचष्टे अर्थापयति, 'णिः क्वचाख्याने णिः' इति णिः, 'नाप् सत्यार्थवेदेभ्यः' इति नाप्, न इत्।

(२) यक्षइवाचरति यक्षति, आचारार्थे क्विः, कानुबन्धः, इकार उच्चारणार्थः, ततो वकारमात्रस्य लोपः, तदन्तत्वेन यक्ष इति धातुसंज्ञा।

श्लोकसंख्या।

२६७। खेट् (भ्वा, प, सक) भयदर्शने ; खेटति।

२६७। खोट् (भ्वा, प, अक) गतिवैकल्ये ; खोटति।

२६८। गाह् (भ्वा, आ, सक, वेट्) विलोड़ने ; गाहते।

२६८। गाध् (भ्वा, आ, सक) इच्छायां ; गाधते।

२६८। गुध् (क्रा, प, अक) क्रोधे ; गुध्नाति।

२६८। गुध् (दि, प, सक) वेष्टने ; गुध्यति।

२६९। एज् (भ्वा, आ, अक) दीप्तौ ; एजते।

२६९। एज् (अदन्तः) शोभने, दीपने ; एजयति।

२६९। इन्ध् (रु, आ, अक) दीप्तौ ; इन्धे।

२६९। एध् (भ्वा, आ, अक) वृद्धौ ; एधते।

२७०। शौट् (भ्वा, प, अक) गर्व्वे ; शौटति।

२७०। शिट् (भ्वा, प, सक) अनादरे ; शेटति।

२७०। सिध्(भ्वा,प,सक)प्रतिपूर्व्वः,निवारणे; प्रतिषेधति।

२७०। सिध् (दि, प, अक) अनिट्, सिद्धौ ; सिध्यति।

२७१। नी (भ्वा, आ, द्विक) प्रापणे ; नयते।

२७१। नी (भ्वा, प, द्विक) प्रापणे ; नयति।

२७१। मृड् (तु, प, अक) हर्षे ; मृडति।

२७१। मृड् (क्रा, प, अक) हर्षे ; मृड्णाति।

---

इति समाप्तमिदं कविरहस्यधृतधातुविवरणम्।

---

## कतिपयपाठादिदोषशुद्धिः।

---

विलमन्ति (४१ पृष्ठायां, ३ पङ्क्तौ) अत्र विलसन्ति इति साधु।

विलाशयन्ति (४१ पृष्ठायां, ५ पङ्क्तौ) अत्र विलासयन्ति इति साधु।

विलाशयन्ति (४१ पृष्ठायां, १८ पङ्क्तौ) ,, ,, ,,

भायं (५१ पृष्ठायां, ६ पङ्क्तौ) अत्र सायं इति साधु।

---